राजकीय प्रकाशन, शिक्षा विभाग, उत्तर प्रदेश

# संस्कृत-सुबोधः

## भाग १

[कक्षा ६ के विद्यार्थियों के लिए]




शिक्षा निदेशालय, उत्तर प्रदेश (बेसिक)

प्रथम संस्करण : १९९१

१९१३ शक
१९९१ ई०

मूल्य 3.30

रचना मण्डल :

सम्पादक : हरि प्रसाद पाण्डेय, निदेशक
राज्य शैक्षिक अनुसंधान और प्रशिक्षण परिषद, उ० प्र०

संयोजक : श्री राजपति तिवारी
श्री गौरी शंकर मिश्र

लेखक मण्डल : डा० (श्रीमती) शैलजा पाण्डेय
श्री इन्द्रपति उपाध्याय
श्री ब्रह्मानन्द शुक्ल
डा० दयानन्द मिश्र
श्री चन्द्र प्रकाश तिवारी, परिषद प्रतिनिधि

परामर्शदाता : डा० उमाशंकर मिश्र
डा० कृष्ण चन्द्र त्रिपाठी

समीक्षक : डा० गया चरण त्रिपाठी

चित्रांकन एवं उत्पादन :

डा० श्रीकृष्ण पाठक, पाठ्य पुस्तक अधिकारी
पाठ्य पुस्तक विभाग
शिक्षा निदेशालय उ० प्र० (बेसिक)

राजनियुक्त प्रकाशक : पवन पुस्तक भण्डार, मथुरा

मुद्रक : आदर्श प्रिंटिंग प्रेस, मथुरा

संस्करण : १९९२

# प्राक्कथन

विद्यालयों में शिक्षा प्राप्त करने वाले बच्चों के व्यक्तित्व का सन्तुलित विकास करने में स्तरानुसार प्रयुक्त पाठ्य सामग्री की भूमिका अत्यधिक महत्त्वपूर्ण है। पाठ्यपुस्तकों में प्रस्तुत पाठ उन अधिगम-बिन्दुओं तथा प्रसंगों पर आधारित होते हैं जिनका निर्धारण पाठ्यक्रम में किया जाता है। इसीलिए राष्ट्रीय शिक्षा नीति १९८६ में जिन समान केन्द्रिक बिन्दुओं तथा मूल्यों पर बल दिया गया है, उनको दृष्टि में रखते हुए राष्ट्रीय स्तर पर नवीन पाठ्यक्रम का विकास कर तदनुसार पाठ्य सामग्री का विकास किया जा रहा है। इसी के अनुसार राज्य में भी प्राइमरी तथा जूनियर हाईस्कूल स्तर पर नवीन पाठ्यक्रम का विकास करने के साथ ही उस पर आधारित नवीन पाठ्यपुस्तकों की क्रमानुसार संरचना की जा रही है। इस श्रृंखला के अधीन प्रणीत पुस्तकों में यह प्रयास किया गया है कि इनकी विषय-सामग्री छात्र-छात्राओं के ज्ञान का संवर्द्धन करने के साथ ही उनमें अपेक्षित योग्यताओं, दक्षताओं, प्रवृत्तियों, मूल्यों तथा आस्थाओं का विकास करे, जिससे वे देश तथा समाज के लिए उपयोगी नागरिक बन सकें।

आशा है प्रस्तुत पाठ्यपुस्तक छात्र-छात्राओं में स्तरानुकूल निर्धारित दक्षताएं विकसित करने के साथ-साथ आदर्श नागरिक के रूप में उनके चरित्र का निर्माण करने में सहायक सिद्ध होगी।

पाठ्य सामग्री को अंतिम स्वरूप प्रदान करने में डा० लक्ष्मी प्रसाद पाण्डेय, शिक्षा निदेशक (बेसिक) एवं अध्यक्ष, बेसिक शिक्षा परिषद, उ० प्र० का बहुमूल्य योगदान रहा है। इसके लिए मैं विशेष रूप से आभार व्यक्त करता हूँ। रचना मण्डल के सदस्य तथा विभाग के सम्बंधित सहयोगी सराहना के पात्र हैं।

शिक्षकों तथा विद्वज्जनों की प्रतिक्रियाओं तथा रचनात्मक सुझावों का स्वागत है।

**हरि प्रसाद पाण्डेय**
निदेशक
राज्य शैक्षिक अनुसंधान और
प्रशिक्षण परिषद, उत्तर प्रदेश
लखनऊ

मई, १९९१

# विषय-सूची

## वन्दना

गजाननं भूतगणादिसेवितं कपित्थजम्बूफलचारुभक्षणम् ।
उमासुतं शोकविनाशकारकं नमामि विघ्नेश्वरपादपङ्कजम् ॥ १ ॥

त्वमेव माता च पिता त्वमेव
त्वमेव बन्धुश्च सखा त्वमेव ।
त्वमेव विद्या द्रविणं त्वमेव
त्वमेव सर्वं मम देव देव ॥ २ ॥

त्वमादिदेवः पुरुषः पुराण-
स्त्वमस्य विश्वस्य परं निधानम् ।
वेत्तासि वेद्यं च परं च धाम
त्वया ततम् विश्वमनन्तरूप ॥ ३ ॥

करेण वीणां परिवादयन्ती तथा जपन्तीमपरेण मालाम् ।
मरालपृष्ठासनसन्निविष्टां सरस्वतीं तां शिरसा नमामि ॥ ४ ॥

मूकं करोति वाचालं पङ्गुम् लङ्घयते गिरिम्,
यत्कृपा तमहं वन्दे परमानन्दमाधवम् ॥ ५ ॥

### अभ्यासः

१. उपर्युक्त श्लोकों को याद कीजिए ।
२. उपर्युक्त श्लोकों का अर्थ लिखिए ।
३. प्रथम श्लोक में किस देवता की वन्दना की गयी है ?

**शब्दार्थाः**

**कपित्थ** = कैथ, **जम्बू** = जामुन, **उमासुतम्** = पार्वती के पुत्र (गणेश), **द्रविणम्** = धन, **वेद्यम्** = जानने योग्य, **ततम्** = व्याप्त है, **परिवादयन्तीम्** = बजाती हुई, **जपन्तीम्** = जपती हुई, **मराल** = हंस, **सन्निविष्टाम्** = बैठी हुई, **मूकम्** = गूंगा, **पङ्गुम्** = लंगड़ा, **माधवम्** = मा + धव = लक्ष्मी-पति विष्णु ।

पाठ–१

# शब्द बोधः

## अकारान्त पुंल्लिङ्ग, नपुंसकलिङ्ग शब्द

## (स्वर वर्ग)

अश्वः



आम्रः



उलूकः



ऊर्णनाभः



ऋक्षः



एरण्डः



ओंकार: ॐ

औषधम् 

## प्रश्नोत्तर शैली में शब्द-ज्ञान



अयम् क: ?
अयम् अश्व: ।
अश्व: किम् करोति ?
अश्व: धावति ।



अयम् क: ?
अयम् आम्र: ।
आम्र: किम् ?
आम्र: फलम् अस्ति ।



अयम् क: ?
अयम् उलूक: ।
उलूक: क: ?
उलूक: एक: पक्षी अस्ति ।



अयम् क: ?
अयम् ऊर्णनाभ: ।



अयम् क: ?
अयम् ऋक्ष: ।
ऋक्ष: क: ?
ऋक्ष: बलवान् पशु: ।

अयम् कः ?

अयम् एरण्डः ।

एरण्डः कः ?

एरण्डः वृक्षः ।



अयम् कः ?

अयम् ओंकारः ।

ॐ

इदम् किम् ?

इदम् औषधम् ।



**अभ्यासः**

१. निम्नलिखित प्रश्नों के संस्कृत में उत्तर दीजिए—
   (क) अश्वः किम् करोति ?
   (ख) आम्रः किम् ?
   (ग) उलूकः कः ?
   (घ) ऋक्षः कः ?
   (ङ) एरण्डः कः ?

२. रिक्त स्थानों की पूर्ति कीजिए—
   (क) अश्वः ........ ।
   (ख) आम्रः .................. अस्ति ।
   (ग) .............. एकः पक्षी अस्ति ।

३. संस्कृत में अनुवाद कीजिए—
   (क) यह मकड़ी है ।
   (ख) यह घोड़ा है ।
   (ग) भालू बलवान् होता है ।
   (घ) यह रेंड़ का पेड़ है ।
   (ङ) यह औषध है ।

**शब्दार्थाः**

उलूकः = उल्लू, ऊर्णनाभः = मकड़ी, ऋक्षः = भालू, एरण्डः = रेंड़ का पेड़, औषधम् = दवा ।

## पाठ–२

# अकारान्त पुंल्लिङ्ग, नपुंसकलिङ्ग शब्द
## (व्यञ्जन वर्ग)

कपोतः



गजः



चन्द्रः



तडागः



पुस्तकम्



मयूरः



वटः



छत्रम्



दाडिमः



नकुलः



फलम्



शशकः



सिंहः



अयम् कः ?
अयम् कपोतः ।
कपोतः कः ?
कपोतः एकः सुन्दरः पक्षी अस्ति ।



अयम् कः ?
अयम् गजः ।
गजः कः ?
गजः विशालकायः पशुः अस्ति ।





अयम् कः ?
अयम् चन्द्रः ।

अयम् कः ?
अयम् तडागः ।
तडागे किम् अस्ति ?
तडागे जलम् अस्ति ।





इदम् किम् ?
इदम् छत्रम् ।

अयम् कः ?
अयम् दाडिमः ।
दाडिमः किम् ?
दाडिमः एकम् फलम् अस्ति ।





अयम् कः ?
अयम् नकुलः ।



इदम् किम् ?
इदम् पुस्तकम् ।



इदम् किम् ?
इदम् फलम् ।



अयम् कः ?
अयम् मयूरः ।
मयूरस्य किम् प्रसिद्धम् ?
मयूरस्य सौन्दर्यम् प्रसिद्धम् । सः अस्माकम् राष्ट्रियः पक्षी ।



अयम् कः ?
अयम् वटः ।



अयम् कः ?
अयम् शशकः ।
शशकः किम् करोति ?
शशकः धावति ।



अयम् क: ?

अयम् सिह: ।

सिह: श्रेष्ठ: पशु: मन्यते, अरण्यस्य च राजा मन्यते ।

## अभ्यास:

१. (क) कपोत: क: ?
   (ख) गज: क: ?
   (ग) अस्माकम् राष्ट्रिय: पक्षी क: ?
   (घ) शशक: किम् करोति ?

२. रिक्त स्थानों की पूर्ति कीजिए—
   (क) कपोत: एक:...............अस्ति ।
   (ख) .............विशालकाय: पशु: अस्ति ।
   (ग) तडागे जलम् ............ ।

३. संस्कृत में अनुवाद कीजिए—
   (क) कबूतर एक सुन्दर पक्षी है ।
   (ख) हाथी एक विशालकाय पशु है ।
   (ग) तालाब में जल है ।
   (घ) राष्ट्रीय पक्षी कौन है ?

४. (क) अस्, कृ, धाव्, मन् धातुओं के प्रथम पुरुष एक वचन में रूप लिखिए।
   (ख) सर्वनाम तद् शब्द के पुंल्लिङ्ग, प्रथमा विभक्ति में रूप लिखिए ।

**शब्दार्था:**

कपोत: = कबूतर, गज: = हाथी, छत्रम् = छाता, दाडिम: = अनार, नकुल: = नेवला, शशक: = खरगोश ।

## पाठ–३

## आकारान्त स्त्रीलिङ्ग शब्द (संस्कृत वर्णक्रम से)
## (स्वर वर्ग)

अजा



आचार्या



ईषा



ऊर्णा



एडका



### प्रश्नोत्तर शैली में शब्द-ज्ञान

इयम् का ?
इयम् अजा ।
अजा का ?
अजा पशुः । सा चरति ।



इयम् का ?
इयम् आचार्या ।
आचार्या किम् करोति ?
आचार्या वालिकाः पाठयति ।



इयम् का ?
इयम् ईषा ।
ईषा का ?
ईषा कृषि कर्षणे साहाय्यम् करोति ।



इयम् का ?
इयम् ऊर्णा ।
उर्णया किम् निर्मितम् भवति ?
ऊर्णया उष्णम् वस्त्रम् निर्मितम् भवति ।



इयम् का ?
इयम् एडका ।
एडका किम् करोति ?
एडका चरति ।



### अभ्यासः

१. संस्कृत में उत्तर दीजिए--
(क) अजा का ?
(ख) ऊर्णया किम् निर्मितम् भवति ?
(ग) एडका किम् करोति ?

२. रिक्त स्थानों की पूर्ति कीजिए--
(क) अजा ................. ।
(ख) आचार्या ........................ पाठयति ।
(ग) उर्णया उष्णम् वस्त्रम् .................. ।

३. संस्कृत में अनुवाद कीजिए—

(क) बकरी चरती है।

(ख) ऊन से क्या बनता है ?

(ग) आचार्या बालिकाओं को पढ़ाती हैं।

(घ) भेड़ चरती है।

(ङ) हल की हरिस से क्या होता है ?

४. इस पाठ से अजा की तरह स्त्रीलिङ्ग एक वचन के तीन शब्द छाँटिए—

**शब्दार्थाः**

- अजा = बकरी, ईषा = हल की हरिस, ऊर्णा = ऊन, एडका = भेड़ी।

पाठ–४

## आकारान्त स्त्रीलिङ्ग शब्द
## (व्यञ्जन वर्ग)

खट्वा



घण्टा



छुरिका



तुला



पिपीलिका



मक्षिका



लता



इयम् का ?
इयम् खट्वा ।
खट्वायाम् वयम् किम् कुर्मः ?
खट्वायाम् वयम् शयनम् कुर्मः ।



इयम् का ?
इयम् घण्टा ।
घण्टा किम् करोति
घण्टा नादम् करोति ।



इयम् का ?
इयम् छुरिका ।
छुरिकया किम् भवति ?
छुरिकया शाकस्य कृन्तनम् भवति ।



इयम् का ?
इयम् तुला ।
तुलया किम् भवति ?
तुलया तोलनम् भवति ।



इयम् का चलति ?
इयम् पिपीलिका चलति ।



इयम् का ?
इयम् मक्षिका ।



इयम् का ?
इयम् लता अस्ति ।



## अभ्यासः

१. संस्कृत में उत्तर दीजिए—
   (क) खट्वायाम् वयम् किम् कुर्मः ?
   (ख) घण्टा किम् करोति ?
   (ग) तुलया किम् भवति ?

२. रिक्त स्थानों की पूर्ति कीजिए—
   (क) खट्वायाम् ............ शयनम् कुर्मः।
   (ख) ........................ तोलनम् भवति।
   (ग) ................. पिपीलिका चलति।

३. संस्कृत में अनुवाद कीजिए—
   (क) वह खाट पर सोता है।
   (ख) यह छूरी है।
   (ग) घण्टा क्या करता है ?
   (घ) यह लता है।
   (ङ) वह तुला है।

४. इदम् शब्द के स्त्रीलिङग के प्रथमा विभक्ति में रूप लिखिए।

**शब्दार्थाः**

खट्वा = खाट, छुरिका = चाकू, तुला = तराजू, पिपीलिका = चींटी।

पाठ–५

# संख्याबोधः (१ तः १० पर्यन्तम्)

| क्रमशः संख्याएं | पुंल्लिङ्ग | स्त्रीलिङ्ग | नपुंसकलिङ्ग |
|---|---|---|---|
| १. | एकः बालकः | एका बालिका | एकम् फलम् |
| २. | द्वौ बालकौ | द्वे बालिके | द्वे फले |
| ३. | त्रयः बालकाः | तिस्रः बालिकाः | त्रीणि फलानि |
| ४. | चत्वारः बालकाः | चतस्रः बालिकाः | चत्वारि फलानि |
| ५. | पञ्च बालकाः | पञ्च बालिकाः | पञ्च फलानि |
| ६. | षट् बालकाः | षट् बालिकाः | षट् फलानि |
| ७. | सप्त बालकाः | सप्त बालिकाः | सप्त फलानि |

| क्रमशः संख्याएं | पुंल्लिङ्ग | स्त्रीलिङ्ग | नपुंसकलिङ्ग |
|---|---|---|---|
| ८. | अष्ट बालकाः | अष्ट बालिकाः | अष्ट फलानि |
| ९. | नव बालकाः | नव बालिकाः | नव फलानि |
| १०. | दश बालकाः | दश बालिकाः | दश फलानि |

### अभ्यासः

१. १ से १० तक गिनती संस्कृत में याद कीजिए।

२. निम्नाङ्कित के संस्कृत-रूप बताइए—

(क) ३ (स्त्रीलिङ्ग)।

(ख) ४ (पुंल्लिङ्ग)।

(ग) ६ (नपुंसकलिङ्ग)।

(घ) ९ (पुंल्लिङ्ग)।

## पाठ–६

# अस्माकम् शरीरम्

## (शब्दः)

केशः, ललाटः, कर्णः, नेत्रम्, नासिका, मुखम्, दन्ताः, ग्रीवा, स्कन्धः, करः, अङ्गुलिः, उदरम्, कटिः, जानुः, चरणः ।




(मानव शरीरस्य चित्रम्)

# अस्माकम् शरीरम्

## (वाक्य प्रयोग, लट् लकार, तद् स्त्रीलिङ्ग)



इयम् कमला । तस्याः शरीरे शुभ्रम् वस्त्रम् अस्ति । सा केशान् प्रसाधयति ।



सा ललाटे तिलकम् करोति । तस्याः कर्णयोः कुण्डले स्तः ।



सा नेत्रे अञ्जयति । कमलायाः दन्ताः धवलाः सन्ति । तस्याः ग्रीवायाम् माला अस्ति ।

### अभ्यासः

१. संस्कृत में उत्तर दीजिए—
   (क) कमला केशान् किम् करोति ?
   (ख) सा ललाटे किम् करोति ?
   (ग) तस्याः ग्रीवायाम् किम् अस्ति ?

२. रिक्त स्थान की पूर्ति कीजिए—
   (क) सा केशान् ............... ।
   (ख) ................... नेत्रे अञ्जयति ।
   (ग) तस्याः ग्रीवायाम् .................. अस्ति ।

**शब्दार्थाः**

अञ्जयति = आंखों में काजल लगाती है, धवलाः = चमकदार, ग्रीवायाम् = गले में ।

पाठ–७

# दैनिक व्यवहारवस्तूनि

पुष्पम्



फलम्



ताम्बूलम्



पर्यङ्कः



क्रीडनकम्



मरिचम्



फेनिलम्



इदम् किम् ?
इदम् पुष्पम् ।
पुष्पम् किम् ददाति ?
पुष्पम् सुगन्धम् ददाति ।



इदम् किम् ?
इदम् फलम् ।
फलम् भक्षणे कीदृशम् भवति ?
फलम् भक्षणे मधुरम् भवति ।



इदम् किम् ?
इदम् ताम्बूलम् ।
ताम्बूलस्य-प्रयोगेण जिह्वा कीदृशी भवति ?
ताम्बूलस्य प्रयोगेण जिह्वा रक्ता भवति ।



अयम् कः ? अयम् पर्यङ्कः ।
पर्यङ्कः कस्मै कार्याय भवति ?
पर्यङ्कः शयनाय विश्रामाय च भवति ।



इदम् किम् ? इदम् क्रीडनकम् ।
क्रीडनकम् कस्मै रोचते ?
क्रीडनकम् शिशवे रोचते ।



इदम् किम् ?
इदम् मरिचम् ।
मरिचम् भोजने कीदृशम् भवति ?
मरिचम् भोजने तिक्तम् भवति ।



इदम् किम् ?

इदम् फेनिलम् ।

फेनिलम् वस्त्रम् किम् करोति ?

फेनिलम् वस्त्रम् स्वच्छम् करोति ।



## अभ्यासः

१. रिक्त स्थानों की पूर्ति कीजिए—

(क) ..................... किम् ददाति ?

(ख) फलम् ..................... भवति ।

(ग) वस्त्रम् स्वच्छम् करोति ..................... ।

२. संस्कृत में वाक्य प्रयोग कीजिए—

ददाति, मधुरम्, ताम्बूलस्य, पर्यङ्कः ।

३. निम्नलिखित वाक्यों का संस्कृत में अनुवाद कीजिए—

(क) यहाँ फूल हैं ।

(ख) वहाँ फल हैं ।

(ग) वह पलंग पर सोता है ।

(घ) बच्चा खिलौना देखता है ।

(ङ) साबुन से वस्त्र साफ होता है ।

**शब्दार्थाः**

ताम्बूलम् = पान, पर्यङ्कः = पलंग, क्रीडनकम् = खिलौना, फेनिलम् = साबुन ।

पाठ–८

# कारकप्रयोगः

रामो राजमणिः सदा विजयते,
रामं रमेशं भजे ।
रामेणाभिहता निशाचरचमूः,
रामाय तस्मै नमः ।
रामान्नास्ति परायणं परतरं,
रामस्य दासोऽस्म्यहम् ।
रामे चित्तलयः सदा भवतु मे,
भो राम मामुद्धर ।

**अभ्यासः**

१. उपर्युक्त श्लोक कण्ठस्थ कीजिए ।
२. इन श्लोकों का अनुवाद हिन्दी में कीजिए ।
३. राम शब्द के आठों विभक्तियों के रूपों को चिह्नित कीजिए ।
४. संस्कृत में अनुवाद कीजिए—
(क) राम आदर्श राजा हैं ।
(ख) मैं राम का भजन करता हूँ ।
(ग) राम को नमस्कार है ।
(घ) मैं राम का दास हूँ ।

**शब्दार्थाः**

राजमणिः = राजाओं में श्रेष्ठ, रमेशम् = रमा + ईशम् = लक्ष्मी के पति को, अभिहता = मारी गयी, चमूः = सेना, परतरम् = बड़ा, उद्धर = उद्धार करो ।

# आदर्शः छात्रः



आलोकः षष्ठकक्षायाम् पठति। सः प्रातःकाले सूर्योदयात् पूर्वम् उत्थाय प्रतिदिनम् मातुः पितुः च चरणयोः नमति। सः नियमेन अनुदिनम् प्रातः सायम् धावति। सः कर्मणि कुशलः, विद्याध्ययनरतः, गुरुप्रियः, अनुशासनप्रियः विनयशीलः च अस्ति।

आलोकः श्रमशीलः अस्ति। सः स्वगृहस्य वाटिकायाः पादपान् सिञ्चति, तृणानि च दूरीकरोति। सः स्ववस्त्राणि स्वयमेव प्रक्षालयति, पुनः च स्वच्छम् वस्त्रम् धारयति। सः पठितान् पाठान् परिश्रमेण पठति पुनः पुनः स्मरति च।

आलोकः सदैव समयेन विद्यालयम् गच्छति। कक्षायाम् सः अनुशासनेन शान्त्या च तिष्ठति। सः विशेषध्यानेन सर्वान् विषयान् पठति, शिक्षकान् समादरति च। विज्ञानविषये सः महान् प्रवीणः अस्ति। तस्य व्यवहारेण छात्राः अध्यापकाः च प्रसन्नताम् अनुभवन्ति। सः गुरूणाम् आज्ञाम् पालयति। अतः अध्ययनरतः, गुरुसेवापरायणः सः कक्षायाम् प्रथमम् स्थानम् सर्वदैव लभते।

किम्बहुना, आलोकः प्रतिदिनम् क्रीडास्थले गत्वा नियमेन क्रीडति। "हाकी" इति तस्य प्रियम् क्रीडनम् विद्यते। क्रीडास्थले अपि सः क्रीडानुशासनम् परिपालयति। सः क्रीडास्थले स्वक्रीडाकौशलेन सर्वान् चमत्करोति। नगरे सर्वासु संस्थासु तस्य क्रीडाकौशलस्य प्रशंसामयी शोभना चर्चा सर्वत्र श्रूयते।

तेन जनपदीयसमारोहे सर्वोत्कृष्टम् स्थानम् पुरस्कारश्च लब्धाः ।

वस्तुतः न केवलेन अध्ययनेन, न वा अनुशासनेन, किम् वा परिश्रमेण, उत वा सद्व्यवहारेण, क्रीडाकौशलेन वा आलोकः आदर्शः छात्रः अपितु अन्ये च नानाविधाः आदर्शचरित्रवर्धकाः गुणाः तस्मिन् विद्यन्ते । अस्य आदर्शगुणान् अनुसृत्य यः कः अपि छात्रः आदर्शभूतः भवितुम् शक्नोति ।

## अभ्यासः

१. संस्कृत में उत्तर दीजिए—
   (क) आलोकः कस्याम् कक्षायाम् पठति ?
   (ख) सः कथम् स्ववस्त्राणि प्रक्षालयति ?
   (ग) आलोकः कस्मिन् विषये महान् प्रवीणः अस्ति ?
   (घ) सः क्रीडास्थले कथम् सर्वान् चमत्करोति ?
   (ङ) नगरे आलोकस्य कीदृशी चर्चा श्रूयते ?

२. रिक्त स्थानों की पूर्ति कीजिए—
   (क) आलोकः श्रमशीलः ........................ ।
   (ख) सः .................. आज्ञाम् पालयति ।
   (ग) .................. अपि सः क्रीडानुशासनम् परिपालयति ।

३. संस्कृत में अनुवाद कीजिए—
   (क) आलोक प्रातःकाल कब उठता है ?
   (ख) वह अनुशासनप्रिय छात्र है ।
   (ग) वह कक्षा में प्रथम आयेगा ।
   (घ) उसका व्यवहार अच्छा था ।
   (ङ) छात्रों को हमेशा खेलना चाहिए ।

४. निम्नलिखित पदों की विभक्तियों के नाम लिखिए—
   सूर्योदयात्, पादपान्, ध्यानेन, गुरूणाम्, आलोके ।

**शब्दार्थाः**

उत्थाय = उठकर, पादपान् = पौधों को, प्रवीणः = कुशल, गुरुसेवापरायणः = गुरु की सेवा में लगा हुआ, किम्बहुना = अधिक क्या कहा जाय, क्रीडनम् = खेल, सर्वोत्कृष्टम् = सर्वश्रेष्ठ, वस्तुतः = वास्तव में, वा = अथवा (या), अनुसृत्य = अनुसरण करके ।

पाठ–१०

# सस्यश्यामला भूमिः

विनोदः प्रमोदः च प्रयागनगरस्य एकस्मिन् विद्यालये षष्ठकक्षायाम् पठतः। तौ मित्रे स्तः। विनोदस्य गृहम् नगरे एव अस्ति तथा प्रमोदस्य एकस्मिन् ग्रामे अस्ति। एकदा विनोदः स्वमित्रम् अकथयत्, "भो मित्र! नगरस्य जीवनम् अत्यन्तम् कष्टकरम् भवति। अत्रत्यम् पर्यावरणम् अत्यन्तम् दूषितम् कोलाहल-पूर्णम् च अस्ति। तत्र कदापि मानसिकी शान्तिः न लभ्यते। मम हृदये तव ग्रामम् द्रष्टुम् महान् अभिलाषः अस्ति। किम् त्वम् स्वग्रामम् दर्शयितुम् नेच्छसि ?"

प्रमोदः स्वमित्रस्य औत्सुक्यम् ज्ञात्वा उक्तवान्, "मित्र! शीतावकाशे अहम् त्वाम् स्वग्रामम् दर्शयितुम् इच्छामि। त्वम् तत्र गत्वा मम ग्रामस्य शोभाम् विकासम् च द्रक्ष्यसि। विविधानि सुखानि अपि अनुभविष्यसि।

अथैकदा अध्ययनावकाशकाले विनोदः प्रमोदेन सह तस्य ग्रामम् गच्छति स्म। सः प्रमोदस्य सम्पूर्णस्य ग्रामस्य परिभ्रमणम् अकरोत्। सः अपश्यत् यत् ग्रामीणाः जनाः प्रातः सूर्योदयात् पूर्वम् एव शय्याम् परित्यजन्ति। सर्वेषाम् ग्रामीणानाम् द्वारेषु धेनवः, महिष्यः, अजाः वृषभाः च बद्धाः सन्ति। ते ग्रामवासिनः तान् पशून् घासम्, अन्नानि हरिततृणानि च खादयन्ति। तेभ्यः गावः, महिष्यः अजाश्च सुमधुरम् दुग्धम् ददति। दुग्धम् पीत्वा तत्र जनाः हृष्टाः पुष्टाः च सन्ति।

प्रमोदः विनोदम् स्वग्रामस्य कृषकाणाम् क्षेत्राणि अपि अदर्शयत्। सः अपश्यत् यत् कृषकाः वैज्ञानिकेन विधिना कृषिकार्यम् कुर्वन्ति। ते "ट्रैक्टर" इति यन्त्रेण स्वक्षेत्राणि कर्षन्ति, नवानि-नवानि बीजानि च वपन्ति। भूमेः उर्वरा-शक्तिम् वर्धयितुम् ते उर्वरकाणि स्वक्षेत्रेषु निक्षिपन्ति। ते नलकूपेन कुल्यानाम् जलैः च क्षेत्राणि सिञ्चन्ति। विनोदस्य मनः गोधूमानाम्, यवानाम्, चणकानाम् सर्षपाणाम् च सस्यश्यामलाम् भूमिम् दृष्ट्वा भृशम् मोदते।

विनोदः तस्य ग्रामस्य प्राकृतिकीम् शोभाम् अपि पश्यति। सः प्रातः प्रमोदस्य वाटिकायाम् गत्वा अनेकेषाम् खगानाम् कलरवम् शृणोति। तत्र शीतलाः मन्दाः

सुगन्धयुक्ताः च वायवः वान्ति । तस्मिन् पर्यावरणे पूर्णा शान्तिः आसीत् । सम्पूर्णम् वातावरणम् शान्तिप्रदम् सुखदम् च आसीत् ।

विनोदस्य हृदयम् ग्राम्यजीवनस्य सुखम् अनुभूय अधिकम् आनन्दितम् भवति । सः मन्यते यत् सुखस्य शान्तेः च स्थलानि ग्रामाः एव । सः आगत्य विद्यालये सहपाठिनः ग्राम्यजीवनस्य महत्त्वम् वर्णयति, येन तेषाम् मनसि ग्रामात् नगरम् प्रति पलायनस्य प्रवृत्तिः न्यूना भवति । ग्रामोत्थानेन एव राष्ट्रोत्थानम् संभवम् ।

## अभ्यासः

१. संस्कृत में उत्तर दीजिए—
   (क) विनोदः प्रमोदः च कस्याम् कक्षायाम् पठतः ?
   (ख) विनोदस्य हृदये किम् द्रष्टुम् महान् अभिलाषः अस्ति ?
   (ग) ग्रामीणाः जनाः कदा शय्याम् परित्यजन्ति ?
   (घ) कृषकाः कथम् क्षेत्राणि सिञ्चन्ति ।
   (ङ) विनोदः स्वसहपाठिनः किम् वर्णयति ?

२. रिक्त स्थानों की पूर्ति कीजिए—
   (क) नगरस्य जीवनम् अत्यन्तम्...... भवति ।
   (ख) सः प्रमोदस्य सम्पूर्णग्रामस्य परिभ्रमणम्......
   (ग) ......पर्यावरणे पूर्णा शान्तिः आसीत् ।

३. संस्कृत में अनुवाद कीजिए—
   (क) विनोद प्रमोद का मित्र है ।
   (ख) ग्रामीण हृष्ट-पुष्ट होते हैं ।
   (ग) विनोद का हृदय प्रसन्न हुआ ।
   (घ) गाँव का वातावरण शान्त था ।
   (ङ) वे दोनों गाँव में रहेंगे ।

४. निम्नलिखित पदों में विभक्तियों के नाम लिखिए—
   नगरस्य, ग्रामम्, प्रमोदेन, वाटिकायाम्, वायुः ।

५. निम्नलिखित पदों में लकारों के नाम लिखिए—
   पठतः, अकरोत्, अनुभविष्यसि, आसीत् ।

**शब्दार्थाः**

औत्सुक्यम् = उत्सुकता, महिष्यः = भैंसें, अजाः = बकरियाँ, उर्वरकाणि = खादें, कुल्यानाम् = नहरों के, गोधूमानाम् = गेहूँ के, भृशम् = बहुत अधिक, कलरवम् = मधुर शब्द, पलायनस्य प्रवृत्तिः = भागने की आदत ।

पाठ–११

# सुभाषितानि

काकचेष्टा वकोध्यानं श्वाननिद्रा तथैव च ।
अल्पाहारी गृहत्यागी विद्यार्थी पंचलक्षण: ॥ १ ॥

अष्टादशपुराणेषु व्यासस्य वचनद्वयम् ।
परोपकार: पुण्याय पापाय परपीडनम् ॥ २ ॥

विद्वत्वं च नृपत्वं च नैव तुल्यं कदाचन् ।
स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते ॥ ३ ॥

एकेनापि सुपुत्रेण सिंही स्वपिति निर्भयम् ।
सहैव दशभि: पुत्रै: भारं वहति रासभी ॥ ४ ॥

उद्यमेन हि सिद्ध्यन्ति कार्याणि न मनोरथै: ।
न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगा: ॥ ५ ॥

गच्छन् पिपीलिको याति योजनानां शतान्यपि ।
अगच्छन् वैनतेयोऽपि पदमेकं न गच्छति ॥ ६ ॥

अभिवादनशीलस्य नित्यं वृद्धोपसेविन: ।
चत्वारि तस्य वर्धन्ते आयुर्विद्यायशोवलम् ॥ ७ ॥

अपि स्वर्णमयीलङ्का न मे लक्ष्मण रोचते ।
जननी जन्मभूमिश्च स्वर्गादपि गरीयसी ॥ ८ ॥

दीपो भक्षयते ध्वान्तं कज्जलं च प्रसूयते ।
यदन्नं भक्ष्यते नित्यं जायते तादृशी प्रजा ॥ ९ ॥

सत्यं ब्रूयात् प्रियं ब्रूयान्न ब्रूयात् सत्यमप्रियम् ।
प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः ॥ १० ॥

अयं निजः परोवेत्ति गणना लघुचेतसाम् ।
उदारचरितानान्तु वसुधैव कुटुम्बकम् ॥ ११ ॥

षड्दोषाः पुरुषेणेह हातव्या भूतिमिच्छता ।
निद्रा तन्द्रा भयं क्रोध आलस्यं दीर्घसूत्रता ॥ १२ ॥

## अभ्यासः

संस्कृत में उत्तर दीजिए—

(क) व्यासस्य वचनद्वयम् किम् ?

(ख) किम् न तुल्यम् कदाचन ?

(ग) केन सिंहो निर्भयम् स्वपिति ?

(घ) अभिवादनशीलस्य कानि चत्वारि वस्तूनि वर्धन्ते ?

(ङ) केषाम् कृते वसुधैव कुटुम्बकम् कथितम् ?

रिक्त स्थानों की पूर्ति कीजिए—

(क) परोपकारः पुण्याय पापाय..............।

(ख) ....................पूज्यते राजा।

(ग) जननी जन्मभूमिश्च...................गरीयसी।

निम्नलिखित वाक्यों का संस्कृत में अनुवाद कीजिए—

(क) विद्वान् की सर्वत्र पूजा होती है।

(ख) कार्य उद्यम करने से सिद्ध होते हैं।

(ग) सत्य बोलना चाहिए।

(घ) यही धर्म है।

(ङ) उदार पुरुषों के लिए सम्पूर्ण पृथ्वी ही कुटुम्ब है।

४. उपर्युक्त श्लोकों में पाँच श्लोकों को कंठस्थ कीजिए।

**शब्दार्थाः**

अष्टादश = अठारह, रासभी = गधी, पिपीलिकः = चींटा, वैनतेयः = गरुड, ध्वान्तम् = अन्धकार, भूति = ऐश्वर्य, इच्छता = चाहने वाले, दीर्घसूत्रता = धीरे-धीरे कार्य करने की आदत।

पाठ–१२

# तपोदत्तकथा

## (लङ् लकार)

पुरा प्रतिष्ठाननगरे तपोदत्तः ब्राह्मणः आसीत्। वाल्यकाले तस्य अ रुचिः अध्ययने न आसीत्। तस्य पिता तपोदत्तस्य अध्ययनात् विमुख विलोक्य वहुदुःखितः अभवत्। कालान्तरम् तपोदत्तस्य पितुः मृत्युः अभव सर्वे जनाः अशिक्षितस्य तपोदत्तस्य उपेक्षाम् अकुर्वन्। अहम् शिक्षितः न अ अतः सर्वे जनाः माम् प्रति उपेक्षाबुद्धिम् धारयन्ति, इति चिन्तयन् सः गु समीपम् न गतवान् अपि तु विद्याप्राप्तये गङ्गातीरम् गत्वा तपः आरभ तपोदत्तस्य ज्ञानार्थम् तपः व्यर्थम्, गुरुम् विना ज्ञानम् न भवति, इति शिक्ष इन्द्रः विप्रस्य वेषम् धृत्वा तत्र आगच्छत्।



सः ब्राह्मणः अब्रुवन् नदीधारायाम् वालुकाम् प्राक्षिपत्। तपोदत्तः त अब्रवीत्–"भो ब्राह्मण ! त्वम् इदम् किम् करोषि ?" ब्राह्मणः प्रति अवदत्–

अहम् गङ्गायाम् सेतुनिर्माणम् करोमि । तपोदत्तः अकथयत्---त्वम् महामूर्खः, जलधारायाम् पतितया वालुकया सेतुनिर्माणम् कथम् करिष्यसि, यतः वालुका जलधारायाम् स्वयमेव अनायासेन प्रवहति ।" तदा ब्राह्मणः अकथयत्--"यथा धारायाम् बालुकया सेतुनिर्माणम् भवितुम् न शक्यते, तथैव गुरुम् विना विद्या लब्धुम् न शक्यते ।" ब्राह्मणस्य कथनम् सत्यम् अस्ति । अतः विद्याप्राप्तये तपः विहाय गुरोः सकाशम गमिष्यामि इति मनसि चिन्तयन् तपोदत्तः स्वगृहम् अगच्छत् ।

## अभ्यासः

१. संस्कृत में उत्तर दीजिए--

(क) तपोदत्तः विद्याप्राप्तये किम् अकरोत् ?

(ख) ब्राह्मणरूपे कः आसीत् ?

(ग) ब्राह्मणः किम् अकरोत् ?

(घ) किम् विना विद्या न लभते ?

(ङ) तपोदत्तः कुत्र अगच्छत् ?

२. रिक्त स्थानों की पूर्ति कीजिए--

(क) अहम् गङ्गायाम्...................करोमि ।

(ख) बालुका.................।

(ग) ..................विना विद्या न लभते ।

३. संस्कृत में अनुवाद कीजिए--

(क) मैं पुल बनाता हूँ ।

(ख) गुरु के विना ज्ञान नहीं होता ।

(ग) बालू बह जायेगी ।

(घ) ब्राह्मण बोला ।

(ङ) तपोदत्त अपने घर चला गया ।

**शब्दार्थाः**

अब्रुवन् = न बोलते हुए, चुपचाप, **प्राक्षिपत्** = फेंकता रहा, **सेतुनिर्माणम्** = पुल को बनाना, **प्रवहति** = बहता है, **विचारयन्** = विचार करते हुए, सोचते हुए, **सकाशम्** = निकट ।

# अस्माकम् देशः



वसुन्धरायाम् नाना देशाः सन्ति। तत्र अस्माकम् देशः अतीव प्रियः अस्ति। तम् विहाय अस्माकम् मनः न कुत्रापि रमते। तस्य भारतवर्षम् इति नाम विद्यते। अस्माकम् देशस्य प्राचीनराज्ञः भरतस्य नाम्ना भारतवर्षम् इति नाम प्रसिद्धम्। तत्र सर्वत्र स्वाभाविकी प्रकृतेः शोभा दृश्यते। अस्य देशस्य शोभाम् दृष्ट्वा देवाः अपि अत्र जन्म वाञ्छन्ति। अस्माकम् देशस्य उत्तरे भागे संसारस्य सर्वतः उच्चैः हिमालयः नाम पर्वतः विराजते। तेन न केवलम् अस्माकम् देशस्य गौरवम् अस्ति, अपितु वैदेशिकानाम् आक्रमणेन अपि मम देशः संरक्षितः विद्यते। नगाधिराजः हिमालयः दुर्लभानाम् औषधीनाम् आलयः विद्यते।

अस्माकम् देशे नानाविधानि शोभनानि वनानि सर्वत्र दृश्यन्ते। तानि वनानि सुगन्धयुक्तानि मनोहराणि च पुष्पाणि धारयन्ति। तत्र सुस्वादूनि नानाविधानि फलानि अपि भवन्ति। श्रूयते, यत् भारतदेशम् विहाय कस्मिन् अपि देशे तथाविधानि सुगन्धयुक्तानि पुष्पाणि न भवन्ति यथा वयम् भारतीया

प्रतिदिनम् अवलोकयामः । प्राचीनानाम् भारतीयानाम् एषः विचारः आसीत् यत् अस्माकम् देशे एव बहवः यज्ञाः अजायन्त, अधुना अपि काले काले भवन्ति । अतः यज्ञस्य धूमस्य प्रभावात् एव भारते पुष्पाणि सुगन्धयुक्तानि भवन्ति ।

गङ्गा यमुना, नर्मदा, कावेरी, गोदावरी गोमती च इत्यादयः नद्यः अपि कलकलैः शब्दैः भारतीयेभ्यः अनायासेन सुखम् सौविध्यम् शान्तिम् च वितरन्ति । अस्माकम् देशस्य दक्षिणे भागे "हिन्दमहासागरः" इति नाम सुविशालः सागरः प्रतिक्षणम् महानादम् करोति । तस्य तीरे तालवृक्षाणाम् नारिकेलवृक्षाणाम् च शोभाकराणि वनानि सन्ति ।

अस्माकम् देशस्य धरित्री महापुरुषाणाम् महावीराणाम् शूराणाम् च जननी अस्ति । अत एव रामकृष्णादयः धर्मस्य रक्षणम् अधर्मस्य च विनाशम् अकुर्वन् । अत्र एव शिविदधीचिहरिश्चन्द्रादयः त्यागिनः दानिनः परोपकारिणः च महापुरुषा, भूमण्डलम् स्वजन्मना अलं चक्रुः । महात्मा बुद्धः अस्माकम् देशे एव जन्म अलभत । राणा प्रतापः, शिवराजः, गुरुगोविन्दसिंह, भगतसिंहः इति अस्माकम् देशस्य वीराः आसन् । अथ च बालगङ्गाधरतिलकः, महात्मागान्धी, पं० जवाहरलालनेहरू, सुभाषचन्द्रः च इति अस्माकम् देशस्य राष्ट्रभक्ताः आसन् । एते खलु भारतीयानाम् कृते अनुकरणीयाः आसन् । अस्माकम् देशे राज्ञी लक्ष्मीबाई, चाँदबीबी, इन्दिरागान्धी प्रभृतयः वीराङ्गनाः अपि अभवन् ।

अस्माकम् देशस्य कलाकृतयः अतीव प्रसिद्धाः आसन् । अजन्ता-एलोरा-मोहनजोदड़ो-हड़प्पा इति प्रमुखाः कलाकृतयः विस्मयकराः सन्ति । तत्र सर्वत्र गुहानाम् भित्तिषु विचित्राः अतिसूक्ष्माः च कलाकृतयः चित्रिताः दृश्यन्ते । उत्तरप्रदेशस्य आगरानगरे ताजमहलनामके भवने या कलाकृतिः अस्ति सा सम्पूर्णस्य विश्वस्य कृते आश्चर्यकरा विद्यते ।

अस्माकम् देशस्य संस्कृतिः सभ्यता च प्राचीनतमा अस्ति । अनेकतायाम् एकता इति भारतीयसंस्कृतेः प्रधान विशेषता । अत्र विविधा प्रदेशाः, विविधाः भाषाः विविधधर्मावलम्बिनः च सन्ति । तथापि सर्वे महता स्नेहभावेन मिलित्वा वसन्ति । अनेकबारम् वैदेशिकैः देशस्य उपरि आक्रमणानि कृतानि किन्तु अद्यापि भारतीया संस्कृतिः अक्षुण्णा विराजते । अस्य धर्मः, दर्शनम्, ज्ञानम् साहित्यम् च सर्वम् अप्रतिमम् एव अस्ति । विचाराः अपि अस्य उदाराः सन्ति । अस्मात्

एव कारणात् अयम् देश: प्राचीनकाले विश्वगुरुः मन्यते स्म । अद्यापि अस्य महती प्रतिष्ठा संसारे वर्तते । अतएव सत्यम् उक्तम्---

**धन्यं हि भारतं वर्षम् धन्या भारतसंस्कृतिः ।**
**भारतीया जना धन्या धन्यास्माकं परम्परा ॥**

अत: जाते: धर्मस्य सम्प्रदायस्य च संकीर्णम् भेदभावम् सन्त्यज्य देशस्य गौरवस्य संरक्षणम् संवर्धनम् च अस्माकम् भारतीयानाम् परमम् आवश्यकम् कर्तव्यम् अस्ति ।

## अभ्यासः

१. निम्नलिखित प्रश्नों का संस्कृत में उत्तर दीजिए---
(क) कस्य नाम्ना अस्माकम् देशस्य नाम ?
(ख) कुत्र बहवः यज्ञाः अजायन्त ?
(ग) अस्माकम् देशस्य कस्मिन् भागे हिन्दमहासागरः अस्ति ?
(घ) कुत्र ताजमहलनामकम् भवनम् अस्ति ?
(ङ) भारतीयसंस्कृतेः का प्रधान विशेषता ?

२. निम्नलिखित वाक्यों में रिक्त स्थानों की पूर्ति कीजिए---
(क) वसुन्धरायाम् नाना ········· सन्ति ।
(ख) अस्माकम् देशस्य उत्तरे भागे ········· ।
(ग) ············· वैदेशिकैः देशस्य उपरि आक्रमणानि कृतानि ।

३. निम्नलिखित वाक्यों का संस्कृत में अनुवाद कीजिए---
(क) हमारा देश अत्यन्त प्रिय है ।
(ख) यहाँ देवता भी जन्म लेना चाहते हैं ।
(ग) भारत के उत्तर भाग में हिमालय पर्वत स्थित है ।
(घ) दक्षिण भाग में हिन्दमहासागर है ।
(ङ) यह देश प्राचीनकाल में विश्वगुरु माना जाता था ।

४. पृथ्वी के पर्याय लिखिए ।

**शब्दार्थाः**

**वसुन्धरा** = पृथ्वी, **नाना** = अनेक, **वाञ्छन्ति** = चाहते हैं, **नगाधिराजः** = पर्वतराज, **धूमस्य** = धुएँ के, **अनायासेन** = बिना कष्ट के, **नादम्** = स्वर, **नारिकेल** = नारियल ।

पाठ–१४

# रक्षाबन्धनम्

वन्द्या खलु भारतीया भूमिः वन्द्या च इयम् भारतीया संस्कृतिः । यत्र तवर्षम् अनादिकालात् नानाविधाः सांस्कृतिकाः उत्सवाः महोत्सवाः च यन्ते, तत्र "रक्षाबन्धनम्" एकः सर्वजनप्रियः प्रमुखः उत्सवः इति को न नाति भारतीयः जनः । ग्रीष्मावसाने प्रावृट्काले श्रावणमासस्य पूर्णिमायाम् यम् उत्सवः सम्पद्यते । अस्मिन् काले न अधिकम् शैत्यम् न वा आतपाधिक्यम् भवति । अतएव जनाः स्वस्थाः, सुखिनः प्रसन्नाश्च जायन्ते । प्रकृतिश्च मनोरमा दर्शनीया, नयनानन्दकरी हरीतिमामयी च दृश्यते । गगने च श्यामाः मेघाः इतस्ततः सर्वत्र परिभ्रमन्ति ।



अस्मिन् अवसरे सर्वाः अपि भगिन्यः स्वस्य भ्रातुः दक्षिणहस्ते नानावर्णकम् विधराग-रञ्जितम् स्वस्नेहसम्बन्धस्य द्योतनाय "रक्षासूत्रम्" बध्नन्ति । तृणाम् च दीर्घायुषः सुखमयस्य जीवनस्य च कृते मङ्गलमयीम् कामनाम् कुर्वन्ति । किम्बहुना, भगिन्यः भ्रातृणाम् मस्तके तिलकम् कुर्वन्ति । अथ च भगिन्यः स्वस्वगृहे नानाविधानि सुस्वादूनि व्यञ्जनानि पचन्ति । महता स्नेहेन च भगिन्यः भ्रातृन् भोजयन्ति । अथ





च भ्रातरः अपि अस्य स्नेहसम्बन्धस्य द्योतनाय निजकर्तव्यपरिपालनाय च दृढम् संकल्पम् धारयन्ति । भ्रातरः बहुमूल्यानि उपहारवस्तूनि धनानि च भगिनीभ्यः

ससम्मानम् ददति। अनया रीत्या परस्परस्नेहव्यवहारेण भगिनीविहीनाः अ
जनाः भगिनीवन्तः भ्रातृविहीनाः भगिन्यः च भ्रातृवत्यः संजायन्ते। अनेन प्रका
जातिधर्मनिरपेक्षतया उत्सवः अयम् प्रवर्तते।

श्रूयते खलु भारतीयस्य इतिहासस्य मध्ययुगे सम्राज्ञी कर्मवती स्वरक्षणा
हुमायूंनामाख्यम् यवनशासकम् स्वभ्रातरम् मत्वा रक्षाबन्धनसूत्रम् बहुम
प्रेषितवती। हुमायुंना तद्रक्षासूत्रम् श्रद्धया सस्नेहम् च शिरसानिधाय स्वा
विकम् भ्रातृभगिनीसम्बन्धम् अवधार्य कर्मवती स्वप्राणैः अपि संरक्षिता।

किम्बहुना, रक्षाबन्धनदिने एव याज्ञिकाः पुरोहिताः अपि स्वयजमानस्य कल्या
कामनया रक्षासूत्रम् बध्नन्ति, यजमानेभ्यश्च आशीर्वादम् ददति। तथाहि—

**येन बद्धो बलीराजा दानवेन्द्रो महाबलः।**
**तेन त्वां प्रतिबध्नामि रक्षे मा चल माचल॥**

अतएव निश्चयेन देशस्य एकतायाः अखण्डतायाः च सम्पोषकः अ
सांस्कृतिकः उत्सवः इति निर्विवादम्। तत्र च इयमेव राष्ट्रव्यापी भावना सर्व
विद्यते। तथाहि—

**सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।**
**सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत्॥**

## अभ्यासः

१. निम्नलिखित प्रश्नों के उत्तर संस्कृत में दीजिए—
   (क) रक्षाबन्धनम् कदा भवति ?
   (ख) रक्षाबन्धनकाले प्रकृतिः कीदृशी दृश्यते ?
   (ग) भगिनीम् प्रति भ्राता कम् सकल्पम् करोति ?
   (घ) रक्षाबन्धनम् कस्य संवर्धनाय आयुज्यते ?
   (ङ) महाराज्ञी कर्मवती कम् सम्राजम् रक्षासूत्रम् प्रेषितवती ?
२. रिक्त स्थानों की पूर्ति कीजिए—
   (क) अस्मिन् काले न अधिकम् ······ न वा च ······ भवति।
   (ख) स्वस्नेहसम्बन्धस्य द्योतनाय ······ बध्नन्ति।
   (ग) भ्रातरः बहुमूल्यानि उपहारवस्तूनि धनानि च ······ ददति।

३. निम्नलिखित वाक्यों का संस्कृत भाषा में अनुवाद कीजिए।

(क) भारतवर्ष में विभिन्न उत्सव होते हैं।

(ख) श्रावणमास की पूर्णिमा तिथि को रक्षाबन्धन आयोजित होता है।

(ग) बहनें भाइयों की दीर्घायु की कामना करती हैं।

(घ) भाई बहन को उपहार देता है।

(ङ) रक्षाबन्धन हमारा सांस्कृतिक गौरव प्रदर्शित करता है।

४. निम्न शब्दों में विभक्ति बताइए—

(खण्ड १) (क) गगने (ख) मेघाः (ग) भगिन्यः (घ) भ्रातृन्

(खण्ड २) निम्न शब्दों में लकार तथा वचन बताइए।

(क) परिभ्रमन्ति (ख) पचन्ति (ग) भोजयन्ति

(घ) ददति (ङ) बध्नन्ति।

**शब्दार्थाः**

प्रावृट्काले = वर्षा के समय, शैत्यम् = सर्दी, रञ्जितम् = रंगे हुए, इतस्ततः = इधर-उधर, अवधार्य = धारण कर, मानकर = मन में रखकर।

# बाल: श्रीकृष्ण:

इन्द्र:—(स्वगतम्) मम पूजायाम् किमर्थम् अयम् अवरोध: कृत: ? कस्मात् कारणात् नन्देन सह सर्वे व्रजवासिन: एवम् कुर्वन्ति ? क्षणम् विचिन्त्य, सगर्वम् अवदत् (प्रकाशम्) अस्य हेतु: श्रीकृष्ण: एव । स: सगर्वो भूत्वा सर्वान् व्रजवासिन: भ्रमयति । एवम् उक्त्वा स्ववैभवेन मदान्ध: इन्द्र: सम्पूर्णम् व्रजम् संत्रस्तम् कर्तुम् प्रतिज्ञाम् अकरोत् । स: मेघान् तम् ग्रामम् जलमग्नम् कर्तुम् आदिशत् । इन्द्रस्य आदेशेन निखिला व्रजभूमि: धारावृष्टिभि: जलमग्ना अभवत् । अत: सर्वे जना: पशव: च भयेन अकम्पन्त । (जलप्लावनम् दृष्ट्वा भयाक्रान्ता: संत्रस्ता: च व्रजवासिन: स्वरक्षणार्थम् कृष्णस्य समीपम् गत्वा प्रार्थयन्ते स्म ।)

एक:—"भो कृष्ण ! व्रजग्रामा: जलमग्ना: अभवन् । इदानीम् वयम् किम् कुर्याम ?"

द्वितीय:—"प्रचण्डवायुना वृक्षा: कम्पन्ते । सर्वत्र एव अन्धकार: प्रसरति । भयभीता: जना: गाव: च किंकर्तव्यविमूढा: सन्त: यत्र-तत्र धावन्ति ।"

कृष्ण:—(स्वगतम्) अस्य सर्वस्य कारणम् देवराज: इन्द्र: एव अस्ति । (प्रकाशम्) "भो व्रजवासिन: ! यूयम् भयम् मा कुरुत । अहम् शीघ्रम् अस्य कष्टस्य निवारणाय उपायम् करिष्ये ।"

नन्द:—"वत्स श्रीकृष्ण ! इयम् संकटमयी वेला । त्वम् व्रजवासिनाम् कष्टम् शीघ्रम् निवारय । क्षणमपि विलम्बम् मा कुरु ।"

यशोदा—"वत्स ! त्रायस्व सर्वान् । इदानीम् विनाशकाल: ।"

कृष्ण:—ताम् आश्वासयति ।

• तदनन्तरम् कृष्ण: व्रजस्य रक्षणार्थम् चिन्ताकुल: भवति । क्षणम् विचिन्त्य स गोवर्धनपर्वतस्य समीपम् गच्छति । ततश्च पर्वतम् उत्पाट्य एकस्मिन् स्व करे गृहीत्वा सर्वेषाम् व्रजवासिनाम् आह्वानम् कृत्वा एवम् उद्बोधयति—"भो ! भो ! व्रजवासिन: ! यूयम् सर्वे अस्य पर्वतस्य अध: गर्ते एव समवेता:



त। अहम् पर्वतम् इमम् एकेन एव हस्तेन उत्थाप्य युष्मान् सर्वान् रक्षिष्यामि। म् मा भैषीः। अतः निश्चिन्तैः भाव्यम्। कृष्णस्य दृढतरम् बचनम् श्रुत्वा र्वे चिन्तारहिताः प्रसन्नाः च संजाताः।

इत्थम् मेघाः निरन्तरम् सप्तदिनम् यावत् अहर्निशम् धारावृष्टिम् अकुर्वन्, न्तु तस्याः वृष्टेः व्रजवासिनाम् उपरि न कश्चन प्रतिकूलः प्रभावः अभवत्। तवर्षीयस्य कृष्णस्य अनेन अद्भुतेन कार्येण सकला व्रजभूमिः रक्षिता इन्द्रस्य मानभंगः अभवत्।

सत्यम् इदम् यत् बालः कृष्णः स्वपराक्रमेण व्रजवासिनाम् रक्षणम् अकरोत्, नाम् च प्राणैः अपि प्रियतरः संजातः। यथा हि:——

"परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्मसंस्थापनार्थाय संभवामि युगे-युगे॥"

—श्रीमद्भगवद्गीता अध्याय-४ श्लोक संख्या ८

## अभ्यासः

१. संस्कृत में उत्तर दीजिए—

(क) कः स्ववैभवेन मदान्धः आसीत् ?

(ख) यशोदा कृष्णम् किम् कर्तुम् अकथयत् ?

(ग) कृष्णः किमर्थम् चिन्ताकुलः अभवत् ?

(घ) कृष्णस्य अद्भुतेन कार्येण किम् अभवत् ?

(ङ) कस्य संस्थापनार्थाय कृष्णः युगे युगे संभवति ?

२. रिक्त स्थानों की पूर्ति कीजिए—

(क) क्षणम् विचिन्त्य सगर्वम्.......... ।

(ख) प्रचण्डवायुना .......कम्पन्ते ।

(ग) ...........ताम् आश्वासयति ।

३. संस्कृत में अनुवाद कीजिए—

(क) इन्द्र का क्या आदेश था ?

(ख) व्रजवासी भयभीत हो गये ।

(ग) मैं व्रज की रक्षा करूँगा ।

(घ) कृष्ण कष्ट में सहायता करते हैं ।

(ङ) इन्द्र देवताओं के राजा थे ।

४. निम्नलिखित पदों में विभक्तियों के नाम लिखिए—

नन्देन, कृष्णस्य, निवारणाय, पर्वतम्, हस्ते ।

५. निम्नलिखित पदों में लकारों के नाम लिखिए—

अवदत्, धावन्ति, रक्षिष्यामि, भवत ।

**शब्दार्थाः**

**अवरोधः** = व्यवधान (रुकावट), **निखिला** = सम्पूर्ण, **निवारय** = रोको, **उत्पाट्य** = उखाड़कर, **समवेताः** = एकत्रित, **मा भैषीः** = मत डरो, **इत्थम्** = इस प्रकार, **अहर्निशम्** = दिनरात, **परित्राणाय** = रक्षा के लिए, **दुष्कृताम्** = पापियों के, **संभवामि** = पैदा होता हूँ ।

## पाठ–१६

# गीतावचनामृतानि

अन्नाद्भवन्ति भूतानि, पर्जन्यादन्नसम्भवः ।
यज्ञाद्भवति पर्जन्यो, यज्ञः कर्मसमुद्भवः ॥ १ ॥
चञ्चलं हि मनः कृष्ण ! प्रमाथि बलवद् दृढम् ।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥ २ ॥
यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥ ३ ॥
न काङ्क्षे विजयं कृष्ण ! न च राज्यं सुखानि च ।
किं नो राज्येन गोविन्द ! किं भोगैर्जीवितेन वा ॥ ४ ॥
सुखदुःखे समे कृत्वा, लाभालाभौ जयाजयौ ।
ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥ ५ ॥
यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ ६ ॥

### अभ्यासः

१. निम्नलिखित प्रश्नों का संस्कृत में उत्तर दीजिए—
 (क) कः विजयम् न काङ्क्षते ?
 (ख) अन्नात् कानि भवन्ति ?
 (ग) किम् चञ्चलम् भवति ?
 (घ) मनसः निग्रहः कस्य इव सुदुष्करः ?
 (ङ) योगेश्वरः कः ?

२. रिक्त स्थानों की पूर्ति कीजिए—
 (क) किं नो······गोविन्द ।
 (ख) ततो युद्धाय········ ।
 (ग) ··········पार्थो धनुर्धरः ।

३. संस्कृत में अनुवाद कीजिए—

(क) अर्जुन ने श्रीकृष्ण से क्या कहा ?

(ख) कृष्ण अर्जुन के सखा थे।

(ग) मन चञ्चल होता है।

(घ) जहाँ श्रीकृष्ण हैं, वहाँ विजय है।

(ङ) श्रीकृष्ण ने कहा, तुम युद्ध करो।

४. पाठ के सभी श्लोकों को कण्ठस्थ कीजिए।

५. निम्नलिखित पदों में विभक्तियों के नाम लिखिए—

विजयम्, युद्धाय, यशः, मम।

**शब्दार्थाः**

काङ्क्षे = चाहता हूँ, पर्जन्यः = बादल, प्रमाथि = विशेष रूप से मथने वाला, निग्रहम् = नियन्त्रण, उद्विजते = उद्वेग को प्राप्त होता है (उद्विग्न होता है), अमर्ष = दूसरे की उन्नति देखकर होने वाला मानसिक संताप, युज्यस्व = तैयार हो जाओ, लग जाओ।

पाठ--१७

# दमयन्ती

## (ईकारान्त स्त्रीलिङ्ग तद् शब्द तथा लङ् लकार का प्रयोग)

आसीत् पुरा निषधदेशे राज्ञः वीरसेनस्य पुत्रः नलः नाम । सः सौन्दर्येण, तेजसा गुणैः च जनानाम् प्रियः अभवत् । तदा विदर्भदेशे भीमो नाम राजा अभवत् । तस्य पुत्री दमयन्ती, अतीवसुन्दरी, शीलादिभिः गुणैः च सम्पन्ना, लोकप्रसिद्धा च आसीत् ।

एकदा नलः स्वराजभवनस्य उपवने परिभ्रमन् एकम् स्वर्णम् हंसम् अपश्यत् । विचित्रम् तम् हंसम् अवलोक्य तस्य मनसि तम् स्वर्णहंसम् प्राप्तुम् महती इच्छा अजायत । अतः सः सहजेन स्नेहेन कराभ्याम् तम् अग्रहीत् । तेन हंसः अतीव



विह्वलः अभवत् । राज्ञः नलस्य मनसि स्थिताम् भावनाम् ज्ञात्वा हंसः राजानम् अकथयत्--"राजन् ! मुञ्च माम् । अहम् एकाकी, मत्परिवारस्य अन्यः कश्चन

पालकः नास्ति । राज्ञः भीमस्य पुत्रीम् दमयन्तीम् भवतः झटिति प्राप्तये यत्नम् करिष्यामि । तथाहि अहम् लोकोत्तरगुणसम्पन्नायाः दमयन्त्याः समक्षम् भवतः नानाविधान् गुणान् कथयिष्यामि, तर्हि सा दमयन्ती भवतः गुणेभ्यः प्रभाविता सती भवन्तम् नूनम् स्वीकरिष्यति इति दृढः मे विश्वासः । इत्थम् च नलः दमयन्त्याः लोभात् हंसम् तत्क्षणम् एव अमुञ्चत् । सः स्वस्य वचनानुसारेण राज्ञ भीमस्य राजभवनम् गत्वा दमयन्त्याः समक्षम् नलस्य नानाविधान् गुणान् अकथयत् । नलस्य गुणगणान् श्रुत्वा दमयन्ती तेन सह विवाहार्थम् दृढम् निश्चयम् अकरोत् ।

ततश्च किञ्चित् कालान्तरम् महाराजः भीमः दमयन्त्याः स्वयंवरार्थम् एकाम् स्वयंवरसभाम् आह्वयत् । तत्र नानादेशेभ्यः प्रख्याताः राजानः इन्द्रादयः देवाः च आहूताः । संयोगात् इन्द्रः, वरुणः, अग्निः यमः च देवाः अपि दमयन्त्या सह विवाहार्थम् प्रस्थानम् अकुर्वन् । ते देवाः स्वयंवरे गच्छन्तः मध्ये मार्गे नलम् अपश्यन् । दमयन्त्याः सौन्दर्येण गुणेन च लुब्धाः दूतकार्यार्थम् नले तिरस्कारिणीम् दिव्याम् विद्याम् प्रतिष्ठाप्य दमयन्त्याः समीपम् प्रेषयन् । देवैः यथा आदिष्टः नलः तथैव कृतवान् । इन्द्रादिदेवानाम् शक्तिम् गुणान् च उक्त्वा नानाविधैः तर्कैः प्रमाणैः च दमयन्तीम् प्रति नलः अकथयत्, यत् इन्द्रादिदेवाः तव वरणयोग्याः, अन्यः कश्चन् राजा न तव वरणयोग्यः । तस्मिन् स्वयंवरे देवाः नलरूपाः अतिष्ठन्



किन्तु ज्ञानेन, विज्ञानेन देवशक्त्या च सम्पन्ना दमयन्ती वास्तविकस्य नलस्य एव वरणम् अकरोत् ।

तत्र इदम् अपि श्रूयते यत् दमयन्ती नितान्तम् पतिपरायणा आसीत् । राजा नलः स्वभ्राता पुष्करेण द्यूतक्रीडायाम् पराजितः अभवत्, तदा पराजिते पति राज्यम् त्यक्त्वा वनम् अगच्छत् । पतिव्रता दमयन्ती अपि राज्यसुखम् त्यक्त्वा राज्ञा नलेन सह वनम् अगच्छत् । राजा नलः वने दुःखम् अनुभवन्तीम् दमयन्तीम् तस्याः पितुः गृहम् गमनाय अकथयत्, किन्तु सा दमयन्ती नलम् विहाय पितुः गृहम् न अगच्छत् । तस्याः कृते वनस्य कष्टानि अपि स्वामिना नलेन सह वासेन सुखकराणि आसन् ।

इत्थम् च दमयन्ती सर्वासाम् भारतीयानाम् नारीणाम् आदर्शभूता अस्ति ।

## अभ्यासः

१. संस्कृत में उत्तर दीजिए—

(क) नलः कस्य पुत्रः आसीत् ?

(ख) नलः कस्य देशस्य राजा आसीत् ?

(ग) दमयन्ती कस्य पुत्री आसीत् ?

(घ) दमयन्त्याः विवाहः केन सह अभवत् ?

(ङ) नलस्य भ्राता कः आसीत् ?

२. रिक्त स्थानों की पूर्ति कीजिए—

(क) तदा विदर्भदेशे भीमो नाम राजा········।

(ख) ··········अतीव विह्वलः अभवत् ।

(ग) राजन् ! ············माम् ।

३. संस्कृत में अनुवाद कीजिए—

(क) दमयन्ती भीम की पुत्री थी ।

(ख) दमयन्ती ने नल से विवाह किया ।

(ग) नल द्यूत में हार गया ।

(घ) दमयन्ती वन गयी ।

(ङ) स्वयंवर में देवता गये ।

४. पाठ से तद् के पुल्लिङ्ग एवं स्त्रीलिङ्ग के रूपों को अलग-अलग छाँटिए ।

**शब्दार्थाः**

सौन्दर्येण = सुन्दरता से, लोकोत्तरगुणसम्पन्नाम् = दैवीगुणों से सम्पन्न, तिरस्करिणी विद्या = जिस विद्या के सहारे व्यक्ति दूसरों द्वारा अदृश्य रह कर, किन्तु स्वयं सबको देखते हुए कहीं भी जा सकता है, द्यूतक्रीडा = जुवे का खेल, पतिपरायणा = पति में अनुरक्ता, पतिव्रता।

## पाठ–१८

# संङ्घे शक्तिः

## (चटकदम्पतीकुञ्जरकथा, लङ् लकार)

आस्ताम् पुरा तमालवृक्षे चटकदम्पती । तयोः अण्डानि अभवन् । एव प्रमत्तः गजः छायार्थम् तत्र आगच्छत् । सः अधिकेन मदेन वृक्षस्य शाखाम् भग्न अकरोत् । अनेन सर्वाणि चटकाण्डानि नष्टानि अभवन् । चटकदम्पती करु अरुदताम् । दम्पत्योः विलापेन दुःखितः सन् तयोः मित्रम् काष्ठकुट्टः तौ शा अकरोत् । ते सर्वे मत्तगजस्य अकल्याणम् कर्तुम् विचारम् अकुर्वन् । का



कुट्टः चटकाभ्याम् सह स्वमित्र "वीणारवा" इति नाम्न्याः मक्षिका समीपम् अगच्छत् । सः गज विनाशार्थाय मक्षिकायाः सहायत अयाचत । सा मक्षिका तैःसह स्वमित्र "मेघनादः" इति संज्ञकस्य दर्दुरस्य स कटम् अगच्छत् । ते मेघनादस्य समक्ष समग्राम् घटनाम् अकथयन् । दर्दुरः तान् गजपराभवस्य उपायम् अवदत् । त मतम् मत्वा मक्षिका गजस्य कर्णयोः मधुरम् शब्दम् अकरोत् । गजः मक्षिका मधुरैः शब्दैः आनन्दस्य आधिक्येन नेत्रे निमीलिते अकरोत् । तदा काष्ठ-कुट्टः स्वचञ्चुभ्याम् गजस्य नेत्रयोः विस्फोटम् अकरोत् । तेन गजः अन्धः अभवत् । अन्धः गजः पिपासया अधिकः आकुलः सञ्जातः ।



ततश्च दर्दुराः गर्तस्य समीपम् तारम् शब्दम् अकुर्वन् । पिपासाकुलः सन् अत्र जलम् अस्ति इति जानन् अन्धः गजः गर्ते अपतत् । तत्रैव तस्य मरणम् अभवत् । उक्तम् च--

"चटका काष्ठकुट्टेन मक्षिकादर्दुरैस्तथा ।
महाजनो विरोधेन कुञ्जरः प्रलयं गतः ।।"

## अभ्यासः

१. संस्कृत में उत्तर दीजिए--
(क) मत्तः गजः किम् अकरोत् ?
(ख) काष्ठकुट्टः चटकाभ्याम् सह कुत्र अगच्छत् ?
(ग) मक्षिका कैः सह अगच्छत् ?
(घ) दर्दुरः तान् कस्य उपायम् अवदत् ?
(ङ) दर्दुराः गर्तस्य समीपम् किम् अकुर्वन् ?

२. रिक्त स्थानों की पूर्ति कीजिए---
(क) आस्ताम् पुरा तमालवृक्षे ........... ।
(ख) अनेन सर्वाणि ...... नष्टानि अभवन् ।
(ग) दर्दुरः तान् ......... उपायम् अवदत् ।

३. संस्कृत में अनुवाद कीजिए--
(क) हाथी मतवाला है ।
(ख) मक्खी मेघनाद के पास गयी ।
(ग) मेढक ने उपाय बताया ।
(घ) हाथी अन्धा हो गया ।
(ङ) हाथी मर गया ।

४. (क) पाठ से लङ् लकार के रूप छाँटिए ।
(ख) पाठ से तृतीया एकवचन के रूप छाँटिए ।

५. पर्याय लिखिए---
वृक्ष, गज ।

**शब्दार्थाः**

**चटक** = (गौरैया) + **दम्पती** (जोड़ा) = **चटकदम्पती** = गौरैया का जोड़ा, **प्र (विशेष)** + **मत्तः** (मतवाला) = विशेष मतवाला, अधिक मतवालाः, काष्ठ (लकड़ी) + **कुट्ट** (काटनेवाला), **काष्ठकुट्टः** = कठफोड़वा पक्षी, **मक्षिकायाः समीपम्** = मक्खी के पास, **दुर्दुरस्य सन्निकटम्** = मेढक के पास, **निमीलिते नेत्रे** = दोनों आँखें बन्द किये हुए, **पिपासया** = प्यास से, **गर्तस्य** = गड्ढे के ।

पाठ–१९

# भ्रातृत्वम्

(विद्यालये नैतिकशिक्षाम् ग्रहीतुम् षष्ठ-कक्षायाः छात्राः समवेताः। शिक्षकस्य प्रतीक्षाम् कुर्वन्तः ते परस्परम् विभिन्न-धर्माणाम् मानवीयमूल्यानाम् च विषये चर्चाम् कुर्वन्ति ।)



वहीदः—भो मित्र सुरेश ! गतदिने नैतिकशिक्षायाः अध्यापन-घंटिकायाम् अहम् उपस्थितः न आसम् । तस्मिन् दिने नैतिकशिक्षकः कस्मिन् विषये पाठम् अपाठयत् ।

सुरेशः—सखे वहीद ! अयम् खेदस्य विषयः अस्ति यत् त्वम् तस्मिन् दिने उपस्थितः न आसीः। तस्य दिनस्य पाठः सुरुचिकरः, शिक्षाप्रदः, जीवनस्य पथ-प्रदर्शकः च आसीत् । तस्य पाठश्रवणेन वयम् आत्मानम् धन्यम् मन्यामहे ।

जुगिन्दरसिंहः—तस्य दिवसस्य पाठः अतीव आनन्ददः ज्ञानप्रदः च आसीत् । नैतिक-शिक्षकः इत्थम् अशिक्षयत् "भारतवर्षम् एकः सुविशालः देशः अस्ति । अत्र बहवः धर्मावलम्बिनः नानाजातीयाः च जनाः निवसन्ति, वस्तुतः ते सर्वे भारतीयाः एव ।"

जैकोबः—शिक्षकः इमम् पाठम् अपाठयत् "सर्वे धर्माः समानाः, सर्वेषाम् धर्माणाम् उद्देश्यानि च समानानि । जगतः कर्ता ईश्वरः एकः एव अस्ति । अतएव भेदबुद्धिम् परित्यज्य सर्वे जनाः स्नेहेन शान्त्या च जीवनम् यापयेयुः । परस्परम् कलहः न सुखावहः । अतः कलहः न कार्यः ।"

वहीदः—अहम् दुर्भाग्यात् तस्मिन् दिने उपस्थितः न आसम् ।

सुरेशः—त्वम् किमर्थम् अनुपस्थितः आसीः ?

वहीदः—सखे सुरेश ! मम ईदोत्सवः निकटः अस्ति । अस्मिन् अवसरे वयम् विविधवस्तूनाम् संग्रहम् कुर्मः । अतः मम पिता विद्यालये आगमनाय अनुमतिम् न दत्तवान् । मम माता पिता च युष्मान् सर्वान् सूत्रिकाखण्डानि भक्षणार्थम् आमन्त्रितवन्तौ ।

सुरेशः, जुगिन्दरसिंहः जैकोबः च सर्वे समवेतस्वरेण निमन्त्रणम् स्वीकृतवन्तः । ते अवदन् "वयम् सर्वे नूनम् आगमिष्यामः ।" ईदोत्सवे सर्वाणि मित्राणि वहीदस्य गृहम् गत्वा अतीव प्रसन्नतया सूत्रिकाखण्डानि अभक्षयन् । वहीदस्य परिवारस्य सर्वे जनाः प्रसन्नाः अभवन् । ते परस्परम् महता स्नेहेन कण्ठे मिलित्वा सानन्दम् स्व-स्वगृहम् प्रत्यागच्छन् ।

ततश्च क्रिस्मसदिवसः अपि आगतः । जैकोबः सर्वान् सुहृदः न्यमन्त्रयत् । सर्वाणि मित्राणि सोत्साहम् तस्य गृहम् गत्वा, उत्सवे भागम् गृहीत्वा केक-पेष्ट्री सुस्वादूनि मिष्टान्नानि च अखादन् ।

ततश्च जुगिन्दरसिंहः भोगोत्सवे अपि स्वसखीन् आहूय कटाहप्रसादम् अपूपानि च भक्षयित्वा [illegible] स्नेहभावम् आत्मीयताभावञ्च अप्रकटयत् ।

अनेन क्रमेण होलिकोत्सवस्य अवसरः अपि उपस्थितः । सुरेशस्य गृहम् गत्वा तस्य मित्राणि गुलाल-अबीरा[illegible] नानारंगैः रञ्जिताः अभवन् । ते हर्षातिरेकेण परस्परम् गाढालिङ्गनम् अकुर्वन् । नानाविधानि व्यंञ्जनानि भुक्त्वा भ्रातृभावेन समुन्मुखाः सन्तः सर्वे स्व-स्वगृहम् गतवन्तः ।

सत्यमेतत्, अस्माकम् देशस्य एते सर्वे उत्सवाः एकतायाः, अखण्डतायाः

भ्रातृभावनायाश्च संदेशवाहका: । वस्तुत: वयम् सर्वे खलु भारतवासिन: भारतीया: एव । अत: सर्वै: भारतीयै: दिवानिशम् इत्येव गेयम्—

उत्तरं [illegible]स्य [illegible]व दक्षिणम् ।
वर्षं त[illegible] नाम भ[illegible] यत्र सन्तति: ।।

### अभ्यास:

१. संस्कृत में उत्तर दीजिए—
   (क) नैतिक-शिक्षाया: कालखण्डे क: उपस्थित न आसीत् ?
   (ख) भारतवर्षम् कीदृश: देश: अस्ति ?
   (ग) सर्वे जना: केन प्रकारेण जीवनम् यापयेयु: ?
   (घ) जैकोब: कान् न्यमन्त्रयत् ?
   (ङ) उत्सवा: कासाम् भावनानाम् संदेशवाहका भवन्ति ?

२. रिक्त स्थानों की पूर्ति कीजिए—
   (क) परस्परम् कलह: न ‥‥‥ ।
   (ख) ‥‥‥ क्रिस्मस दिवस: अपि आगत: ।
   (ग) अनेन क्रमेण ‥‥‥ अवसर: अपि उपस्थित: ।

३. संस्कृत में अनुवाद कीजिए—
   (क) यह पाठ अच्छा है ।
   (ख) वह कलह नहीं करता है ।
   (ग) मेरा मित्र नहीं उपस्थित था ।
   (घ) ईदोत्सव कब होता है ?
   (ङ) सभी सुखी होंगे ।

४. निम्नलिखित पदों में विभक्तियों के नाम लिखिए—
   शिक्षाम्, दिने, ईश्वर:, वस्तूनाम्, भ्रातृभावेन ।

५. निम्नलिखित पदों में लकारों के नाम लिखिए—
   कुर्वन्ति, आसीत्, आगमिष्याम:, अखादन् ।

**शब्दार्था:**

अध्यापनघटिकायाम् = पढ़ाने के घण्टे में, वस्तुत: = वास्तव में, परित्यज्य = छोड़कर, सुखावह: = सुख देने वाला, सूत्रिकाखण्डानि = सिवइँ (बहुवचन में), सम्मेलत = मिले हुए (एक साथ), प्रत्यागच्छन् = लौट गये, सुहृद: = मित्रों को, आहूय = बुलाकर, अपत्यानि = पुत्रों को, दिवानिशम् = दिन-रात ।

पाठ–२०

## शिविरम्

संजयः स्वमित्रस्य धनञ्जयस्य गृहम् गच्छति । तत्र उभे अपि मित्रे परस्परम् संलापम् कुरुतः ।

संजयः—सखे ! धनञ्जय ! किमर्थम् चिरात् दृष्टः असि ?

धनञ्जयः—सत्यमेतत्, किं त्वया न श्रुतम्, यत् मम विद्यालयस्य तत्त्वावधाने एकम् भ्रमण-शिविरम् आयोजितम् आसीत् । तत्र अस्माकम् विद्यालयस्य विंशतिः छात्राः सम्मिलिताः अभवन् ।

संजयः—एवम् । कुत्र एतत् शिविरम् आयोजितम् आसीत् ?

धनञ्जयः—नगरात् न अतिदूरे गङ्गायाः तटे स्थिते प्रतिष्ठानपुरे (झूसी नामाख्ये) इदम् शिविरम् आयोजितम् आसीत् ।

संजयः—किम् शिविरे सर्वेषाम् छात्राणाम् भागग्रहणम् अनिवार्यम् आसीत् ?

धनञ्जयः—आम् । किं त्वं न जानासि ? यत् भ्रमण-शिविराणि शिक्षायाः व्यावहारिकाणि, प्रभावकराणि रुचिवर्धकाणि च साधनानि सन्ति । एतेषु छात्राः परस्परम् मिलित्वा जातेः धर्मस्य च भेदान् विहाय सौहार्दभावनया च कार्यम् कुर्वन्ति । शिविरकार्यक्रमेषु शिक्षकाः अपि वयोलिङ्गजात्यादेः भेदभावम् अविगण्य प्रसन्नतया छात्रैः सहभागग्रहणम् कुर्वन्ति ।

संजयः—मित्र ! शिविरेण के के लाभाः जायन्ते इति अपि सविस्तरम् कथय ।

धनञ्जयः—सखे ! यद्यपि शिविरेषु लाभानाम् भूयसी संख्या वर्तते, किन्तु प्राधान्येन सहयोगस्य स्वावलम्बनस्य च भावना संवर्धते । सहैव तेषु कष्टसहिष्णुता शौर्यसाहसादिगुणानाम् सहजः विकासो भवति ।

संजयः—महद् आश्चर्यकरम् एतत् । अन्यत् अपि त्वया तत्र याः याः शिक्षाः लब्धाः ताः अपि श्रावय ।

धनञ्जयः—सखे ! तत्र वयम् अपूर्वम् प्राकृतिकम् सौन्दर्यम् दृष्ट्वा सर्वे प्रफुल्लिताः अभवाम । तत्रत्यानाम् जनानाम् व्यवहारम्, संस्कृतिम् सामाजिकार्थिकव्यवस्थाम् च शिक्षितुम् अवसरम् प्राप्तवन्तः । तत्र वयम् प्राथमिका-

स्वास्थ्यपरिचर्याम्, स्वच्छताम्, नियमितम् व्यायामम्, मार्गनियमान् च ज्ञातवन्त एतत् सर्वम् शिक्षायाः वास्तविकम् व्यावहारिकम् च ज्ञानम् विद्यते ।

सजयः—साधु, शोभनम् इदम् आयोजनम् आसीत् । सत्यमेतत् कक्षाय गृहे वा दीर्घकाले अपि यदा ज्ञातुम् न शक्यते तथा त्वया अल्पीयसा कालेन शिविरे ज्ञातम् इति ।

धनञ्जयः—अन्यद् अपि मया शिक्षितम् यत् नानाभाषा-धर्म-सम्प्रदाय-अ लम्बिनः सन्तः अपि वयम् सर्वे भारतीयाः भारतराष्ट्रनिवासिनः एव । परस्पर सहयोगेन भारतस्य गौरवम् प्रतिष्ठायाः च रक्षणाय परिकरः बन्धनीयः, भारतीया एकता-अखण्डता च सुदृढा स्यात् । एतदर्थम् जीवनपर्यन्तम् यत अनुष्ठेयः इति अस्माकम् सर्वेषाम् शिविरवासिनाम् दृढतरः संकल्पः । तत्र च अ अस्माकम् घोषः—

समानो व आकूतिः समाना हृदयानि वः ।
समानमस्तु वो मनो यथा वः सुसहासति ।।
ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै ।
तेजस्विनावधीतमस्तु । मा विद्विषावहै ।।

## अभ्यासः

१. निम्नलिखित प्रश्नों का उत्तर संस्कृत में दीजिए—
   (क) भ्रमणशिविरम् कुत्र आयोजितम् आसीत् ?
   (ख) शिविराणि शिक्षायाः कानि साधनानि सन्ति ?
   (ग) शिविरेषु प्राधान्येन कयोः भावः विकसति ?
   (घ) शिविरे छात्राः किम् शिक्षितुम् अवसरम् प्राप्तवन्तः ?
   (ङ) शिविरवासिनाम् कः दृढः संकल्पः ?
२. रिक्त स्थानों की पूर्ति कीजिए—
   (क) किमर्थं चिराद् ...... ........ ...?
   (ख) विद्यालयस्य ............ सम्मिलिताः अभवन् ।
   (ग) ...... ...एकता अखण्डता च सुदृढा स्यात् ।
३. बाल शिविर से क्या शिक्षा मिलती है ?
४. निम्नलिखित वाक्यों का संस्कृत में अनुवाद कीजिए—
   (क) बाल शिविर से क्या लाभ होता है ?
   (ख) तुम वहाँ क्या सीखते हो ?
   (ग) देश की रक्षा आवश्यक है ।

पाठ–२१

# नीति-वचनानि

परोक्षे कार्यहन्तारं प्रत्यक्षे प्रियवादिनम् ।
वर्जयेत् तादृशं मित्रं विषकुम्भं पयोमुखम् ॥ १ ॥

प्रियवाक्यप्रदानेन सर्वे तुष्यन्ति मानवाः ।
तस्मात् तदेव वक्तव्यं वचने का दरिद्रता ॥ २ ॥

पुस्तकस्था तु या विद्या परहस्तगतं धनम् ।
कार्यकाले समुत्पन्ने न सा विद्या न तद्धनम् ॥ ३ ॥

सुलभाः पुरुषा राजन् सततं प्रियवादिनः ।
अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ ४ ॥

अश्वानां लक्षणं वेगो गजानां लक्षणं मदः ।
चातुर्यं लक्षणं स्त्रीणाम् उद्योगो लक्षणं नृणाम् ॥ ५ ॥

दुर्बलस्य बलं राजा बालानां रोदनं बलम् ।
बलं मूर्खस्य मौनित्वं चौराणामनृतं बलम् ॥ ६ ॥

उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये ।
पयः पानं भुजङ्गानां केवलं विषवर्धनम् ॥ ७ ॥

उत्सवे व्यसने चैव दुर्भिक्षे राष्ट्रविप्लवे ।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः ॥ ८ ॥

धनधान्यप्रयोगेषु विद्यासङ्ग्रहणेषु च ।
आहारे व्यवहारे च त्यक्तलज्जः सुखी भवेत् ॥ ९ ॥

मूर्खस्य पञ्चचिह्नानि गर्वी दुर्वचनी तथा ।
हठी चाप्रियवादी च हितोक्तं नैव मन्यते ॥१०॥

## अभ्यासः

१. संस्कृत में उत्त[illegible] दीजिए—

(क) कीदृ[illegible] त्रम् वर्जं[illegible]

(ख) केन सर्वे मानवाः तुष्यन्ति ?

(ग) कीदृशः वक्ता श्रोता च दुर्लभः ?

(घ) केषाम् कृते उपदेशः प्रकोपाय भवति ?

(ङ) कः सुखी भवति ?

२. रिक्त स्थानों की पूर्ति कीजिए—

(क) कार्यकाले समुत्पन्ने ............................ तद्धनम् ।

(ख) ............ लक्षणम् वेगो ......... लक्षणं मदः ।

(ग) चौराणाम् अनृतम् ............ ।

३. संस्कृत मे अनुवाद कीजिए—

(क) प्रिय बोलने वाले लोग सुलभ होते हैं।

(ख) मूर्ख का बल मौन होता है।

(ग) आहार व्यवहार में लज्जा नहीं करनी चाहिए।

४. पाठ के किन्ही पाँच श्लोकों को याद कीजिए।

**शब्दार्थाः**

विषकुम्भम् = विष के घड़े को, पथ्यस्य = हितकारी, अनृतम् = असत्य (झूठ), दुर्भिक्षे = अकाल में।

२१

# मातृ-वात्सल्यम्

पुरा एकस्मिन् स्थाने द्वे नार्यौ वसतः स्म। तयोः परस्परम् महती प्रीतिः। ालान्तरे तयोः मध्ये एकस्य पुत्रस्य विषये महान् कलहः अजायत। सरला—–यम् मम पुत्रः इति सक्रोधम् उद्घोषयति। विमला—–न अयम् तव, अपितु यम् मम पुत्रः इति तारस्वरेण प्रतिवदति। इत्थम् च क्रमेण तयोः कलहः रमावस्थाम् गतः।

अथ विवादे पराकाष्ठाम् गते द्वे अपि न्यायालयम् गतवत्यौ। तयोः वाक्कीलौ व-स्व पक्षम् न्यायाधीशस्य समक्षम् सप्रमाणम् प्रस्तुतवन्तौ। न्यायाधीशः उभय-पि पक्षम् समम् अश्रुतपूर्वकम् च ज्ञात्वा किंकर्तव्यविमूढः सञ्जातः। सः प्रारम्भे कथयत्—–सर्वप्रथमम् अयम् बालकः कया सह अधिकाम् प्रसन्नताम् अनुभवति ति ? सः तु उभाभ्याम् सह प्रसन्नः दृश्यते इति ज्ञात्वा न्यायाधीशः निर्णतुम् समर्थः अभवत् अयम् वस्तुतः कस्याः पुत्रः।

अधिकम् सूक्ष्मम् विचिन्त्य न्यायाधीशः अवदत् यत् मया उभयः पक्षः श्रुतः। ाम्प्रतम् निर्णयम् सावधानतया शृण्वन्तु। बालकम् प्रति भवत्योः समाना नेहमयी च प्रीतिः। अतः इमम् बालकम् विभज्य अर्धम् अर्धम् स्वीकुरुताम्। मम् निर्णयम् श्रुत्वा विमला प्रसन्ना अभवत्। सरला तु मूर्च्छिता सती तत्क्षणमेव मौ अपतत्। सा नानाविधैः उपचारैः अर्धघण्टानन्तरम् चेतनाम् लब्धवती। तः च सा करौ प्रसार्य बहुविह्वला, अश्रुधाराभिः रुदती न्यायाधीशम् प्रार्थयत्— ान्याः ! मोहनस्य रोमांशच्छेदनमपि मम प्राणच्छेदनसमम् अति दुःखकरम् विष्यति। भवन्तम् अस्य बालकस्य अहम् जीवनम् याचे। दीयताम् इमम् ालकम् विमलायै, यस्यै कस्यै वा इत्यत्र न मदीयः कोऽपि दुराग्रहः, किन्तु येन ालकः अयम्, स्वस्थः, सुखी चिरायुः च भवेत् तथैव भवद्भिः कर्तव्यम्।

क्षणेन मौनम् त्यक्त्वा न्यायाधीशः स्वनिर्णयम् अघोषयत्—–वस्तुतः सर-ायाः ममत्वम् स्वाभाविकम्, तस्याः मूर्छा च नैसर्गिकी, अतः सरलैव मोहनस्य-

माता इत्येव अस्य वादस्य निर्णयः । विमलायाः पक्षः न विचारयोग्यः । एव
न्यायाधीशस्य बुद्धिवैभवेन सरला स्वपुत्रम् पुनः प्राप्य बहुप्रसन्ना अभवत् ।

## अभ्यासः

१. संस्कृत में उत्तर दीजिए—
   (क) सरला सक्रोधम् किम् उद्घोषयति ?
   (ख) विवादे द्वे कुत्र गतवत्यौ ?
   (ग) न्यायाधीशस्य प्रथमनिर्णयम् श्रुत्वा सरला किम् अभवत् ?
   (घ) रुदती सरला न्यायाधीशम् कस्मै बालकप्रदानाय प्रार्थयत् ?
   (ङ) वस्तुतः मोहनस्य माता का ?

२. रिक्त स्थान की पूर्ति कीजिए—
   (क) अयम् मम ............ इति सक्रोधम् उद्घोषयति ।
   (ख) अयम् वस्तुतः कस्याः ............ ।
   (ग) ............ पक्षः न विचारयोग्यः ।

३. संस्कृत में अनुवाद कीजिए—
   (क) दोनों में बहुत प्रेम था ।
   (ख) मोहन किसका पुत्र है ?
   (ग) न्यायाधीश ने कहा ।
   (घ) आधा-आधा स्वीकार कीजिए ।
   (ङ) सरला बहुत प्रसन्न हुई ।

**शब्दार्थाः**

प्रीतिः = प्रेम, कलहः = झगड़ा, पराकाष्ठाम् = अन्तिम सीमा तक, न्याय लयम् = कचहरी, न्यायाधीशः = जज, अश्रुत (बिना सुने) + पूर्वकम् (पहले) = अश्रुत पूर्वकम् = पहले सुना नहीं गया, किम् (क्या) + कर्तव्य (करना चाहिए) + विमूढः ( समझने वाले) किंकर्तव्यविमूढः = कर्तव्य न समझ पाने वाला, रोमांश (रोयें का अंश छेदनम् (काटना) = रोमांशच्छेदनम् = रोम टूटना ।

# स्वामिभक्तः

आसीत् तिमिराच्छन्ना रात्रिः। एकलः एव रक्षकः दुर्गस्य द्वारि आसीत्। सहसा सः पादक्षेपध्वनिम् अशृणोत्। इतस्ततः निपुणतया पश्यन् सः गम्भीरस्वरेण अवदत् "कः कोऽत्र भोः? उत्तरम् अप्राप्य सः पुनः अवदत्, "कः कोऽत्र भोः? अत्रान्तरे सः अपश्यत् यत् कश्चित् इत एव आगच्छति। तम् विलोक्य सः अवदत् "कः एष मृत्युमुखम् आयाति बधिरः?" एतत् श्रुत्वा संन्यासिवेषधरः गौरसिंहः तम् अकथयत्, "एष अहम् स्व शिष्येण सह आगच्छामि। क्रोधम् मा करोतु।"

रक्षकः---किम् त्वम् न जानासि यत् अयम् शिववीरस्य दुर्गः। प्रश्नस्य उत्तरम् अदत्वा आगच्छन् जनः मृत्युम् गच्छति। पुनश्च त्वम् तु रात्रौ आगतः असि।

संन्यासी---क्षम्यताम्। अहम् संन्यासी अस्मि। शिववीरम् द्रष्टुम् इच्छामि।

रक्षकः---क्षम्यताम्। प्रवेशः निषिद्धः।

संन्यासी---संन्यासिनाम् कृते कुत्रापि कदापि वा प्रवेशनिषेधः न भवति।

रक्षकः---महाराजस्य सन्ध्योपासनसमये भवादृशानां प्रवेशसमयः भवति। रात्रौ न।

संन्यासी---इत आगच्छ, किमपि कर्णे कथयिष्यामि।

रक्षकः---(तथा कृत्वा) कथयतु।

संन्यासी---यदि त्वम् साम्प्रतम् मम प्रवेशः कारयिष्यसि तर्हि परिष्कृत-पारदभस्म तुभ्यम् दास्यामि। तेन त्वम् ताम्रम्, स्वर्णम् विधातुम् समर्थः भविष्यसि।

रक्षकः---(सक्रोधम्) भोः कपटसंन्यासिन्! उत्कोचेन लोभयसि। विश्वासघातम् शिक्षयसि। तिष्ठ! कः त्वम्? कुतः आगतः? केन प्रेषितः?

संन्यासी---मा मा एवम्।

रक्षकः---त्वम् गूढचरः असि। देशद्रोही असि। (इत्युक्त्वा तम् हस्तेन आकर्षति।)

संन्यासी---त्यजतु माम्। नाहम् पुनः अत्र आगमिष्यामि। न च ए
कथयिष्यामि।

रक्षकः---अये! उत्कोचपटुः, इति उक्त्वा तम् आकृष्य दुर्गाध्यक्षम् प्र
गन्तुम् प्रवृत्तः।

(अन्धकारात् प्रकाशम् प्राप्य संन्यासी कथयति, "रक्षक! माम् न जाना
प्रकाशे सम्यक् विलोक्य रक्षकः तम् पर्यचिनोत्)

रक्षकः---आः कथम् श्रीमान् गौरसिंहः? आर्य! क्षम्यताम्।

गौरसिंहः---(तस्य पृष्ठे हस्तम् कृत्वा) रक्षक! मम परीक्षायाम् उत्ती
असि। त्वम् सम्मानयोग्यः।

## अभ्यासः

१. निम्नलिखित प्रश्नों का संस्कृत में उत्तर दीजिए---
   (क) दुर्गस्य द्वारि कः आसीत्?
   (ख) संन्यासिवेषधरः रक्षकम् किम् अकथयत्?
   (ग) संन्यासिनः किम् नाम आसीत्?
   (घ) रक्षकः गौरसिंहम् कथम् पर्यचिनोत्?

२. रिक्त स्थानों की पूर्ति कीजिए---
   (क) सहसा सः ............ अशृणोत्।
   (ख) शिववीरम् द्रष्टुम् ..............।
   (ग) ............ तम् हस्तेन आकर्षति।

३. निम्नलिखित पदों में विभक्ति का नाम लिखिए---
   दुर्गस्य, गौरसिंहः, रात्रौ, हस्तेन।

४ निम्नलिखित वाक्यों का संस्कृत में अनुवाद कीजिए---
   (क) रक्षक कहाँ खड़ा था?
   (ख) संन्यासी रात में आया था।
   (ग) मैं मित्र से मिलूंगा।
   (घ) वह देशद्रोही नहीं है।
   (ङ) रक्षक ने कर्तव्य का पालन किया।

**शब्दार्थाः**

तिमिराच्छन्ना = अंधकार से घिरी हुई, इतस्ततः = इधर-उधर, निषिद्धः = रोक दि
गया। उत्कोचेन = घूस से, गूढचरः = गुप्तचर, सम्यक् = अच्छी तरह से, पर्यचिनोत् =
पहचान लिया।

पाठ–२४

# महात्मागान्धी

महात्मागान्धी अस्माकम् राष्ट्रपिता आसीत् । १८६९ ईसवीये वर्षे अक्टूबरमासस्य द्वितीये दिनाङ्के गुर्जरराज्यस्य पोरबन्दरनामके नगरे अस्य जन्म अभवत् ।



महात्मागान्धी

अस्य नाम मोहनदासः आसीत् । पितुः नाम कर्मचन्द्रः मातुः च पुतलीदेवी इति आसीत् । गुर्जरराज्ये हिन्दूजातीये परिवारे पुत्रस्य नाम्ना सह पितुः नाम्नः व्यवहारः भवति । अतएव अस्य "मोहनदास कर्मचन्द्रः" इति नाम अभवत् । गान्धिनि महोदये उदारान् मानवीयान् गुणान् दृष्ट्वा विश्वकविः रवीन्द्रः तम् "महात्मा" इति शब्देन सम्बोधितवान् । ततः पश्चात् सर्वे भारतीयाः तम् गान्धिनम् "महात्मागान्धी" इति संज्ञया व्यवहरन्ति । किम् च भारतीयाः जनाः "बापू" इति अस्य नाम महता स्नेहेन श्रद्धया च गृहणन्ति ।

गान्धीमहोदयः सत्यम् अहिंसाम् च प्रति दृढव्रतः आसीत् । अनेन, दीनानाम् दुःखितानाम् च दुःखस्य विनाशाय भूयान् प्रयासः कृतः । अथ च समाजे तिरस्कृतानाम् हरिजनानाम् उद्धाराय अयम् निखिले स्वजीवने महान्तम् संघर्षम् अकरोत् । अस्य प्रारम्भिकी शिक्षा पोरबन्दरनामकनगरे अभवत् । अयम् खलु शैशवात् एव सत्यस्य परिपालने तत्परः अभवत् । एकदा विद्यालये निरीक्षणार्थम् विद्यालयानाम् निरीक्षकः आगतवान् । तदा सः निरीक्षकः गान्धिनः कक्षायाम् गत्वा गान्धिनम् सम्बोध्य अपृच्छत्, त्वम् आङ्ग्लभाषायाम् "केटल" इति शब्दम् लिख । महता यत्नेन अपि गान्धी शुद्धम् "केटल" इति शब्दम् लेखने समर्थः न अभवत् । कक्षायाः अध्यापकेन शुद्धलेखनाय संकेतेन गान्धी प्रेरितः । सत्यस्य परिपालने रतः, गान्धी अध्यापकस्य संकेतम् सत्यस्य आचरणस्य विरुद्धम् मत्वा अध्यापकस्य संकेतानुसारम् न किञ्चिद् विहितवान् । एषा शैशवकालिकी गान्धिनः विलक्षणा सत्यनिष्ठा आसीत् ।

गान्धीमहोदयः १९०८ ईसवीये वर्षे उच्चैः शिक्षाम् प्राप्तुम् इङ्गलैण्डदेशम् अगच्छत् । तदानीम् विदेशस्य गमनावसरे सत्यपरायणा धर्मनिष्ठा च अस्य माता पुतली देवी गान्धिनम् आदेशम् अकरोत् । त्वया तत्र मांसादीनाम् अभक्ष्याणाम् वस्तूनाम् भक्षणम् कदापि न कर्त्तव्यम् । अथ च त्वया मदिरायाः स्पर्शः अपि न कार्यः । मातुः आदेशम् शिरसा निधाय, निखिले स्वस्य जीवने मातृभक्तः गान्धी मांसस्य भक्षणम्, मदिरायाः स्पर्शम् अपि न अकरोत् । इङ्गलैण्डदेशे "बार ऐटला" इति उपाधिम् लब्ध्वा मुम्बईनगरे (बम्बई नगरे) उच्चन्यायालये अधिवक्ता-कार्यम् आरभत । वैदेशिकानाम् गौराङ्गानाम् भारतीयान् प्रति अत्याचारम् अमानवीयान् च व्यवहारान् दृष्ट्वा गान्धिनः मनः अत्यन्तम् दुःखितम् अभवत् । अतएव गान्धीमहोदयः वैदेशिकानाम् शासनम् मूलेन उच्छेतुम् भारतमातुः च स्वतन्त्रतायै दृढाम् प्रतिज्ञाम् अकरोत् ।

गान्धिनः जीवनम् आडम्बररहितम् आसीत् । शरीरस्य कृशतरत्वे अपि अस्य हृदयम् आत्मबलम् च वज्रात् अपि सुदृढम् आसीत् । गान्धी विदेशीयवस्त्राणाम् पूर्णतया परित्यागम् अकरोत् । गान्धी जीवने सदैव खादी वस्त्रम् धृतवान् । गान्धिना खादीवस्त्रस्य वयने, तस्य धारणे च अनेके कार्यक्रमाः आयोजिताः । खादीवस्त्रधारणाय भारतीयाश्च सम्प्रेरिताः । खादीधौतवस्त्रम्, उत्तरीयम् च विहाय गान्धिना किमपि अन्यत् वस्त्रम् न धृतम् । अस्य महात्मनः नेत्रयोः उपनेत्रे, अधोभागे धवलम् धौतवस्त्रम्, करे यष्टिकाम् दृष्ट्वा अनायासेन जनेषु गान्धिनम् प्रति सहजा श्रद्धामयी भावना समुदेति ।

अस्य महापुरुषस्य एषः दृढः सङ्कल्पः आसीत्—

न त्वहं कामये राज्यं न स्वर्गं नापुनर्भवम् ।
कामये दुःखतप्तानां प्राणिनामार्तिनाशनम् ॥

## अभ्यासः

१. निम्नलिखित प्रश्नों का संस्कृत में उत्तर दीजिए—
   (क) गान्धिनः महोदयस्य मातुः किम् नाम आसीत् ?
   (ख) तस्य प्रारम्भिकी शिक्षा कुत्र अभवत् ?
   (ग) गान्धीमहोदयः इङ्गलैण्डदेशे कम् उपाधिम् अलभत् ?

(घ) गान्धीमहाभागः स्वजीवने कीदृशम् वस्त्रम् धृतवान् ?

(ङ) गान्धिनः महोदयस्य कः दृढः संकल्पः आसीत् ।

२. निम्नलिखित पदों में लकारों के नाम बताइए—

भवति, अकरोत्, लिख ।

३. निम्नलिखित पदों में विभक्तियों के नाम लिखिए—

विदेशस्य, भारतीयान्, जीवने, श्रद्धया, निरीक्षकः ।

४. निम्नलिखित वाक्यों का संस्कृत में अनुवाद कीजिए—

(क) हमारे देश के राष्ट्रपिता कौन थे ?

(ख) हरिजनों का उद्धार किसने किया था ?

(ग) उसे सदैव सत्य बोलना चाहिए ।

(घ) अब हमारा देश स्वतंत्र है ।

(ङ) अब देश की रक्षा करो ।

---

**शब्दार्थाः**

**सत्यपरायणा** = सत्य में लगी हुई, **मूलेन उच्छेतुम्** = जड़ से काटने के लिए, **उत्तरीयम्** = दुपट्टा, **भूयान्** = अत्यधिक, **निखिले** = सम्पूर्ण, **विलक्षणा** = अनोखी, **विहाय** = छोड़ करके, **यष्टिकाम्** = छड़ी को ।

## पाठ–२५

# अस्माकम् राष्ट्रोन्नायकाः



बालगंगाधरतिलकः

अयम् अस्ति लोकमान्यः बालगंगाधरतिलकः। अस्य पिता गंगाधरराव: माता च पार्वतीबाई आसीत्। स्वतन्त्रतायाः आन्दोलनस्य प्रसङ्गे अयम् इदम् अघोषयत् 'स्वराज्यम् अस्माकम् जन्मसिद्धः अधिकारः"। समाचारपत्राणाम् प्रकाशनम् संपादनम् च कृत्वा अयम् देशसेवाम् करोति स्म। बहुवारम् कारागारे निक्षिप्तः अपि अयम् निस्पृहः लोकसेवको देशसेवाव्रतम् न अत्यजत्। अयम् गणिते संस्कृते च महान् विद्वान् आसीत्। वैदेशिकाः अपि अस्य वैदुष्यम् प्रशंसन्ति स्म। अयम् १६२० ख्रिस्ताब्दे परमदेशभक्तः दिवम् गतः।

अयम् अस्ति महामनाः मदनमोहन मालवीयः। अस्य पिता पं० ब्रजनाथः माता च मुन्नीदेवी आसीत्। स्नातकपरीक्षाम् उत्तीर्य अयम् अल्पकालम् अध्यापनम् अकरोत्। तदनन्तरम् अध्यापनम् त्यक्त्वा समाचारपत्राणाम् सम्पादनेन देशसेवाम् आरभत। श्रीमता ह्यूमेन प्रेरणाम् प्राप्य अयम् पुनः स्नातकोत्तरपरीक्षाम् उत्तीर्य विधिशास्त्रम् अधीतवान्। ततः च वाक्कीलः अभवत्। अयम् महान् वक्ता आसीत्। अतः जनाः एनम् धाराशास्त्री इति कथयन्ति स्म। महात्मा गान्धी एनम् अग्रज इति कथयति स्म। काशी हिन्दूविश्वविद्यालयस्य स्थापनाम् कृत्वा अयम् स्वकीयम् सर्वस्वम् देशाय अर्पयत्।



पं० मदनमोहन मालवीयः

इयम् अस्ति भारतकोकिला सरोजिनी नायडू। १९३२ खिस्ताब्दे यदा अन्ये राष्ट्रनेतारः बन्दीकृताः, तदा इयम् सत्याग्रहान्दोलनस्य नेतृत्वम् अकरोत्। स्वतन्त्रे भारते इयम् उत्तरप्रदेशस्य राज्यपालपदम् अलङ्कृतवती। इयम् भारतस्य प्रथमः स्त्रीराज्यपालः आसीत्। अस्याः काव्यानि बहुप्रसिद्धानि लोके गीयन्ते विद्यालयेषु च पाठ्यन्ते। अस्याः काव्यपाठः बहुमधुरः आसीत्। अतएव इयम् भारतकोकिला इति कथ्यते स्म।


सरोजिनी नायडू


सरदार बल्लभभाईपटेलः

अयम् अस्ति लौहपुरुषः बल्लभभाईपटेलः। वैरिस्टरपरीक्षाम् उत्तीर्य अयम् सार्वजनिकसेवाम् आरभत। अस्य योग्यताम्, उत्साहम्, सङ्कल्पशक्तिम् कर्तव्यपरायणत्वञ्च विलोक्य महात्मागान्धी एनम् "सरदार" इति उपाधिना सम्बोधितवान्। वैदेशिकाः पत्रकाराः एनम् "लौहपुरुष" इति संज्ञया व्यवहरन्ति स्म। स्वतन्त्रे भारते अयम् भारतशासनस्य गृहमन्त्री अभवत्। देशे विद्यमानानाम् अनेकेषाम् राज्ञाम् राज्यानि समाप्य असौ भारत-सङ्घे सम्मेलितवान्।

अयम् अस्ति भगत सिंहः। स्वविवाहविषये अयम् स्वपितरम् अलिखत् यत् पराधीने भारते न अहम् इच्छामि विवाहम् कर्तुम्। १९२९ खिस्ताब्दे वाइसरायस्य सभायाम् आग्नेयास्त्रस्य प्रक्षेपणात् अयम् स्वमित्रेण सह बन्दीकृतः कारागारे च निक्षिप्तः। अस्मात् कारणात् अस्मै आंग्लशासनम् मृत्युदण्डम् अघोषयत्। क्षमायाचनार्थम् मित्रैः प्रार्थितः स अकथयत् "आततायिनः न अहम् क्षमाम् याचे। देशाय बलिदानम् माम् प्रसादयति, उन्नतभालम् च करोति।" २३ मार्च १९३१ खिस्ताब्दे मृत्युदण्डम् स्वीकृत्य परमवीरो अयम् भगत सिंहः स्वदेशाय आत्मनः आहुतिम् अकरोत्।


भगत सिंहः

## अभ्यासः

१. निम्नलिखित वाक्यों का संस्कृत में उत्तर लिखिए—

(क) तिलकस्य पितुः किम् नाम आसीत् ?

(ख) "स्वराज्यम् अस्माकम् जन्मसिद्धः अधिकारः" इति कः अघोषयत् ?

(ग) भारतस्य प्रथमः स्त्रीराज्यपालः कः आसीत् ?

(घ) कः लौहपुरुषः कथ्यते ?

(ङ) कः पराधीने भारते विवाहम् कर्तुम् न ऐच्छत् ।

२. निम्नलिखित वाक्यों में रिक्त स्थानों की पूर्ति कीजिए—

(क) अयमस्ति लोकमान्यः········तिलकः ।

(ख) ····················भारतस्य प्रथमः स्त्रीराज्यपालः आसीत् ?

(ग) स्वतन्त्रे भारते अयम् भारतशासनस्य········ ।

३. निम्नलिखित वाक्यों का संस्कृत में अनुवाद कीजिए—

(क) स्वतन्त्रता हमारा जन्म सिद्ध अधिकार है ।

(ख) सरोजिनी नायडू भारत कोकिला कही जाती हैं ।

(ग) मदनमोहन मालवीय महान् वक्ता थे ।

(घ) सरदार पटेल लौहपुरुष कहे जाते हैं ।

(ङ) भगत सिंह ने अपने देश के लिए आत्माहुति कर दी ।

४. अयम् और इयम् शब्द में विभक्ति निर्देश कीजिए ।

**शब्दार्थाः**

**कारागारे** = जेल में, **बन्दीकृता** = बन्दी बनाये गये, **कोकिला** = कोयल, **वाक्कीलः** = वकील, **आरभत** = प्रारंभ किया, **सम्मेलितवान्** = मिला लिया, **प्रक्षेपणात्** = प्रक्षेपण (छोड़ने) से, **आंग्लशासने** = अंग्रेजी शासन में ।

पाठ–२६

# पण्डितजवाहरलालनेहरू

भारतीयायाः स्वतन्त्रतायाः सम्प्राप्तेः पूर्वम् अनेके साहससम्पन्नाः विशिष्टगुणसंयुक्ताः च महापुरुषाः भारते अभवन् । तत्र पण्डितजवाहरलालनेहरू महाशयः अन्यतमः अस्ति । बाल्यकालाद् एव अस्य महाशयस्य भारतमातरम् स्वतन्त्राम् कर्तुम् बलवती ईहा आसीत् । एतदर्थम् निखिले अपि जीवने समर्पितेन भावेन स्वतन्त्रतायाः प्राप्तये स्वीयम् सुखादिकम् सन्त्यज्य अहर्निशम् अनेन प्रयासः विहितः ।



पं० जवाहरलालनेहरू

अस्य महापुरुषस्य जन्म १८८९ ईसवीये वर्षे नवम्बरमासस्य चतुर्दशदिनाङ्के उत्तर प्रदेशस्य प्रख्याते इलाहाबादनगरे अभवत् । अस्य जन्मतः प्रारम्भात् एव आर्थिकी सामाजिकी च स्थितिः, शोभना सुदृढा च आसीत्, पिता च अस्य श्री मोतीलाल नेहरूः महान प्रख्यातः वाक्कीलः सर्वसाधनसम्पन्नः च आसीत् । अस्य माता श्रीमती स्वरूपरानी अपि महती विदुषी, नाम्ना एव स्वरूपवती च आसीत् ।

पण्डित जवाहरलाल नेहरू महोदयस्य प्रायेण सर्वा अपि शिक्षा इङ्ग्लैण्डादौ विदेशे अभवत् । कैम्ब्रिजविश्वविद्यालये स्नातक परीक्षाम् विधिपरीक्षाम् च उत्तीर्य सः महान् विधिवेत्ता अभवत् । विदेशात् प्रत्यावर्तनानन्तरम् कमला नेहरू महाशयया सह अस्य महोदयस्य विवाहः अभवत् । अनयोः विवाहसम्बन्धः सर्वथा आदर्शमयः अन्येषाम् कृते अनुकरणीयः च आसीत् ।

अथ विवाहादिसम्बन्धम् भारतीयविधिना सम्पाद्य नेहरूमहाशयः वाक्कील-व्यवसायम् प्रारब्धवान् । अयम् महानुभावः प्रकृत्या धीरः, निर्भीकः, राजनीतिपटुः, प्रगल्भः वक्ता च अभवत् । एतैः विशिष्टैः गुणैः स्वकीयेन त्यागेन उदारेण च व्यवहारेण भारतीयानाम् जनानाम् हृदि महत्वपूर्णम् स्थानम् अलभत । शनैः शनैः राष्ट्रीयया भावनया सर्वथा परिपूर्णः अयम् जनः वैदेशिकम् परिधानम्

परित्यज्य भारतीयम् खादीवस्त्रम् धृतवान् । महात्मनः गान्धिनः सम्पर्के आगते सः स्वतन्त्रतासङ्ग्रामे सन्नद्धः अभवत् ।

सौभाग्यात् अस्य इन्दिरा नाम्नी तनया अभवत् । सा अपि पितुः इव विक्षणाप्रतिभायुता आसीत् । स्वकीयेन विलक्षणज्ञानेन लोकप्रियतया च अयम् नेहरू महाशयः भारतस्य प्रधानमन्त्रिपदम् अलञ्चकार । भारतस्य स्वतन्त्रतासम्प्राप्तये अनेन महाशयेन महात्मागान्धिनः नेतृत्वे अनेके आन्दोलनकार्यक्रमाः संचालिताः । क्रूरैः वैदेशिकैः पं० जवाहरलालनेहरूमहाशयः बहुबारम् कारागारे निक्षिप्तः । किन्तु नाना विधया यातनया प्रपीडितोऽपि नेहरू महाशयः स्वतन्त्रताप्राप्तिसंकल्पात् न विरतः । फलतः अस्य प्रयासेन १९४२ ईसवीये वर्षे "भारतं त्यज" इत्येवं विधः महान् नादः कृतः । अथ च १९४७ ईसवीये वर्षे अगस्तमासस्य पञ्चदशतारिकायाम् भारतम् स्वतन्त्रम् अभवत् । इदं सर्वैः एकेन स्वरेण स्वीक्रियते यत् इयं भारतस्वतन्त्रता पण्डित नेहरू महोदयस्य त्यागस्य बलिदानस्य च फलम् अस्ति । नेहरू महाशयेन भारतस्य शिक्षायाः विज्ञानस्य औद्योगिकस्य विकासस्य च सम्पादनाय अनेके कार्यक्रमाः आयोजिताः । तत्र पञ्चवर्षीययोजनाः प्रमुखाः कार्यक्रमाः सन्ति । कृषिक्षेत्रे उद्योगक्षेत्रे च अनेन महाशयेन अनेकानि उल्लेखनीयानि कार्याणि सम्पादितानि । बालकैः बालिकाभिश्च सह अस्य महान् स्नेहमयव्यवहारः आसीत् । अतएव भारतीयैः बालकैः बालिकाभिश्च "नेहरू चाचा" इति स्नेहमयेन सम्बोधनेन अयम् सम्बोधितः । अस्मिन् महापुरुषे गुणानाम् भूयसी संख्या विद्यते । भारतान्वेषणम् (डिस्कवरी आफ इंडिया) इति तदीया प्रसिद्धा कृतिः अस्ति, याम् अधीत्य सरलतया इदं ज्ञातु शक्यते, यत् कीदृशः सत्यनिष्ठः, धीरः वीरः, लोककल्याणरतः नेहरू महाशयः आसीत् । १९६४ ईसवीये वर्षे मईमासस्य २७ दिनाङ्के अयम् नेहरू महाशयः दिवलोकम् अगच्छत् । अद्यापि अस्य महापुरुषस्य यशःशरीरम् भारते सर्वत्र परिव्याप्तमस्ति ।

## अभ्यासः

१ निम्नलिखित प्रश्नों का संस्कृत में उत्तर दीजिए—

(क) पण्डित जवाहरलालस्य जन्म कुत्र अभवत् ?

(ख) अस्य पितुः किम् नाम आसीत् ?

(ग) अस्य शिक्षा कुत्र अभवत् ?

(घ) भारतम् कदा स्वतन्त्रम् अभवत् ?

(ङ) पण्डित नेहरू महाभागस्य के के विशिष्टगुणाः आसन् ?

२. निम्नलिखित वाक्यों में रिक्त स्थानों की पूर्ति कीजिए—

(क) श्री मोतीलाल नेहरू महान् प्रख्यातः ······ आसीत् ।

(ख) ······ विश्वविद्यालये स्नातक परीक्षाम् उत्तीर्य महान् विधिवेत्ता अभवत् ।

(ग) नेहरूमहाशयः स्वतन्त्रताप्राप्ति संकल्पात् न ······ ।

३. निम्नलिखित वाक्यों का संस्कृत में अनुवाद कीजिए—

(क) भारत में अनेक महापुरुष हुए है ।

(ख) नेहरू जी उनमें से एक थे ।

(ग) पं० नेहरू का जन्म कब हुआ ?

(घ) नेहरू जी की शिक्षा विदेश में हुई ।

(ङ) १५ अगस्त सन् १९४७ को देश स्वतन्त्र हुआ ।

४ निम्नलिखित शब्दों में विभक्ति निर्देश कीजिए—

स्वतन्त्रतायाः, बाल्यकालम्, स्वतन्त्रताम्, प्राप्तये ।

**शब्दार्थाः**

**ईहा** = इच्छा, **सन्त्यज्य** = त्यागकर, (सम + त्यज्य), **प्रख्यातः** = प्रसिद्ध, **वाक्कीलः** = वकील, **प्रत्यावर्तनानन्तरम्** = लौटने के बाद, **प्रगल्भः** = उद्भट, **परिधानम्** = वस्त्र, **परिव्याप्तम्** = व्याप्त है ।

# रणपण्डितः अब्दुलहमीदः

भारतस्य रण पाण्डित्यम् जगति विख्यातम् अस्ति। पुरा अत्र असंख्यकाः रणपण्डिताः वीराः शूराः च अभवन्। वस्तुतः इयम् भारतीया भूमिः वीराणाम् जननी अस्ति इति सर्वः अपि लोकः स्वीकरोति। प्राचीने भारते श्रीरामः, लक्ष्मणः, श्रीकृष्णः, द्रोणाचार्यः अर्जुनः च इत्यादयः अनेके अगणिताः प्रख्याताः रणपण्डिताः अभवन्। आधुनिके युगे अपि पृथ्वीराजचौहानः, राणाप्रतापः, चन्द्रशेखरः, रामप्रसाद बिस्मिलः च इत्यादयः अनेके रण-पण्डिताः अभवन्। तत्र अब्दुल-हमीदस्य प्रमुखम् स्थानम् अस्ति। अब्दुलहमीदमहाभागेन यत् रणकौशलम् प्रदर्शितम् तस्य स्मरणात् एव सर्वैः मानवैः अस्य नाम बहुश्रद्धया सर्वत्र स्मर्यते गीयते च। अस्मात् एव कारणात् अयम् जनः निखिले अपि संसारे श्रद्धापात्रम् विद्यते।

अस्य वीरवरस्य अब्दुलहमीदस्य जन्म १९३३ ईसवीये वर्षे उत्तर प्रदेशे गाजीपुर जनपदे "धुम-आपुरम्" इति ग्रामे अभवत्। अस्य परिवारस्य सामाजिकी, आर्थिकी च स्थितिः अतीव साधारणा आसीत्। शैशवात् एव अस्य मल्लविद्यायाम्, यष्टिकाचालनादिषु क्रीडासु च स्वाभाविकी अभिरुचिः आसीत्। बहोः अभ्यासात् असौ लक्ष्यभेदादिषु क्रीडासु अपि विशिष्टम् कौशलम् अलभत। अध्ययनात् क्रीडायाम् अस्य अधिका अभिरुचिः आसीत्। १९५४ ईसवीये वर्षे दिसम्बरमासस्य सप्तमे दिनाङ्के अब्दुलहमीदः भारतीयायाम् सेनायाम् प्रवेशम् प्राप्तवान्। स्वस्य रण-कौशलेन, परिश्रमेण निष्ठया च असौ उच्चाधिकारिणाम् दृष्टौ महत्वपूर्णम् स्थानम् अलभत।

१९६५ ईसवीये वर्षे पाकिस्तानदेशः अस्माकम् देशे आक्रमणम् अकरोत्। अब्दुलहमीदः तदा लवपुरस्य (लाहौर) युद्ध क्षेत्रे "कसूर" इति नामके स्थले युद्धे नियुक्तः आसीत्। अमेरिकादेशस्य पाकिस्तान देशम् प्रति सनातनः पक्षपातः जगति विख्यातः अस्ति। अतएव तस्मिन् युद्धे अपि अमेरिका देशेन पाकिस्तान-

देशाय बहुशक्तिसम्पन्नाः अभेद्याः दूरमारकाः पैटनटैङ्काः सहायतार्थम् प्रदत्ताः। तदानीम् तस्मिन् युद्धे भारतभूमेः गौरवस्य संरक्षणार्थम् अब्दुलहमीदेन भारतीयैः सैनिकैश्च पाकिस्तान सैनिकानाम् अभेद्यानाम् अस्त्राणाम् यथा उत्साहेन प्रतिरोधः कृतः न तथा केन अपि अभारतीयेन कर्तुम् शक्यते। तथा हि, तत्र अब्दुलहमीदः स्वस्य मृत्योः भयम् विहाय कन्दुकस्य क्रीडनम् इव चमत्कारजनकम् रणकौशलम् प्रदर्शितवान्। युद्धक्षेत्रम् क्रीडायाः क्षेत्रम् मत्वा निर्भयः सन् युद्धम् अकरोत्। तस्मिन् युद्धे पाकिस्तानसैनिकानाम् गोलकानि वस्तुतः अभेद्यानि अद्भुतशक्तिसम्पन्नानि च आसन् किन्तु वीरवरः अब्दुलहमीदः तानि गोलकानि अति सामान्यानि कन्दुकानि इव मत्वा जीपवाहनम् आरूढः मातृभूमेः गौरवस्य रक्षणाय विचित्रम् रणकौशलम् अदर्शयत्। तदानीम् टैङ्क वाहनैः शतत्रयहस्तदूरम् अब्दुलहमीदस्य उपरि अतीव भीषणः गोलकानाम् प्रक्षेपः कर्तुम् आरब्धः। धन्यम् अब्दुलहमीदस्य धैर्यम् रणकौशलम् च येन तत्र हस्तगोलकानि प्रक्षिप्य पाकिस्तानसैनिकानाम् टैंकः विनाशितः। स्पृहणीया भारतीया शूरता, यत् युद्धस्य नानासाधनसम्पन्नाः अपि पाकिस्तानसैनिकाः केवलेन धैर्येण, रणकौशलेन, अतिसामान्ययुद्धस्य साधनेन च वीरवरेण अब्दुलहमीदेन निरुद्धाः। विचित्रा क्रूरस्य कालस्य गतिः यत् तृतीयेन पाकिस्तानसैनिकानाम् टैङ्केन प्रक्षिप्तेन एकेन एव गोलकेन वीरवरः अब्दुलहमीदः मृत्युम् अलभत।

नूनम् अयम् वीरः सर्वेषाम् भारतीयानाम् कृते अनुकरणीयः वन्दनीयः च। यथा च उक्तम् श्रीमद्भगवद्गीतायाम्—

**"हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्।**
**तस्मादुत्तिष्ठ कौन्तेय ! युद्धाय कृतनिश्चयः॥"**

इत्थम् च अब्दुल हमीदः इव सर्वैः अपि भारतीयैः नागरिकैः भारतभूमेः गौरवस्य संरक्षणार्थम् प्रतिक्षणम् देशरक्षायाः अनुष्ठानम् कर्तव्यम् इति गीतायाः सर्वस्वम्।

**अभ्यासः**

१. निम्नलिखित प्रश्नों का संस्कृत में उत्तर दीजिए—
   (क) अब्दुलहमीदस्य जन्म कुत्र अभवत् ?
   (ख) अयम् वीरवरः सेनायाम् कदा प्रवेशम् प्राप्तवान् ?

(ग) युद्धे अब्दुलहमीदेन कीदृशम् रणकौशलम् प्रदर्शितम् ?
(घ) किम् नामकम् टैङ्कम् अब्दुलहमीदः विनाशितवान् ?
(ङ) अब्दुलहमीदः कथम् मृत्युम् अलभत ?

२ रिक्त स्थानों की पूर्ति कीजिए--
(क) भारतीया भूमिः ........ जननी अस्ति ।
(ख) अध्ययनात् ........ क्रीडायाम् अस्य अधिका अभिरुचिः आसीत् ।
(ग) अयम् वीरः सर्वेषाम् भारतीयानाम् कृते ........ च ।

३ निम्नलिखित वाक्यों का संस्कृत में अनुवाद कीजिए--
(क) अब्दुल हमीद एक वीर सैनिक था ।
(ख) अब्दुल हमीद का जन्म सामान्य परिवार में हुआ था ।
(ग) उसने देश की रक्षा में प्राणों को त्याग दिया ।
(घ) उसकी मृत्यु कैसे हुई ?

**शब्दार्थाः**

**प्रख्यातः** = विशेष रूप से प्रसिद्ध, **यष्टिका** = लाठी (छड़ी), **आरूढ** = चढ़ा हुआ, **प्रक्षिप्य** = फेंककर, **निरुद्धाः** = रोक दिये गये । **उक्तम्** = कहा गया है, **महीम्** = पृथ्वी को

# अस्माकम् राष्ट्रियचिह्नानि

भारतराष्ट्रस्य राष्ट्रियचिह्नानि सन्ति--

त्रिवर्णकः राष्ट्रध्वजः, राष्ट्रगानम्, कमलम् पुष्पम्, मयूरः व्याघ्रः च ।




१. त्रिवर्णकः राष्ट्रध्वजः

अस्माकम् राष्ट्रध्वजः त्रिभिः वर्णैः संयुतः । ध्वजे त्रिपट्टिकाः विराजन्ते । प्रथमा पट्टिका काषायवर्णा । द्वितीया खलु पट्टिका श्वेतवर्णा । तृतीया पट्टिका हरितवर्णा । श्वेतपट्टिकायाः मध्ये अशोकचक्रम् विद्यते ।

अर्थवतः ध्वजस्य त्रयः अपि वर्णाः सन्ति । तथा हि काषायवर्णः उत्साहम्, ज्ञानम्, सौहार्दम् च द्योतयति । श्वेतवर्णः शान्तिम्, सत्यम्, निर्मलताम् च द्योतयति । हरितवर्णः सुखस्य समृद्धेः, विकासस्य च सूचकः अस्ति । ध्वजस्य मध्यभागे विराजमानम् अशोकचक्रम् धर्मस्य, सत्यस्य, अहिंसायाः च द्योतकम् अस्ति ।

२. राष्ट्रगानम्

अस्माकम् राष्ट्रगाने विश्वकविना कवीन्द्रेण रवीन्द्रेण "जन-गण-मन" इति रचितम् अस्ति । प्रत्येकम् राष्ट्रम् स्वस्य राष्ट्रगानस्य सम्मानम् करोति ।

सभायाः समापने राष्ट्रगानस्य गानम् आवश्यकम् अस्ति । विद्यालये च प्रार्थनायाः पश्चात् प्रतिदिनम् राष्ट्रगानम् क्रियते । राष्ट्रगानम् श्रद्धास्पदम् भवति । श्रद्धया एव इदम् गेयम् भवति ।

**३. कमलम् पुष्पम्**



कमलम् अस्माकम् राष्ट्रियम् पुष्पम् । पङ्के उत्पन्नम् अपि इदम् पङ्कहीनम् स्वच्छम् भवति । इदम् सौन्दर्यस्य, कोमलतायाः, निर्मलतायाः शान्तेः च सन्देशम् वितरति ।

**४. मयूरः**

अयम् अस्माकम् राष्ट्रियः खगः । अस्य सौन्दर्यम् नृत्यम् च प्रसिद्धम् । अयम् सुन्दरतायाः, शिक्षायाः कलायाः च द्योतकः । सर्पभक्षणम् अस्य जन्मजातः



गुणः । विषकारकाणाम्, उपद्रवकारकाणाम् तत्वानाम् विनाशः भवेत् इति अस्य मानवानाम् कृते शुभसन्देशः ।

**५. व्याघ्रः**

पुरा भारतस्य राष्ट्रियः पशुः सिंहः एव आसीत् । साम्प्रतम् खलु व्याघ्रः राष्ट्रियः पशुः इति स्वीकृतः विद्यते । अयम् पशुषु अत्यन्तम् तेजस्वी पराक्रमी च

अस्ति। राष्ट्रियाः जनाः शक्तिसम्पन्नाः भवेयुः इति अस्य सन्देशः।



एतानि अस्माकम् राष्ट्रियचिह्नानि राष्ट्रस्य गौरवाधायकानि इति स्वीकृतम् विद्यते।

**अभ्यासः**

१. संस्कृत में उत्तर दीजिए—
   (क) राष्ट्रध्वजे पट्टिकानाम् कियती संख्या विद्यते ?
   (ख) अस्माकम् राष्ट्रगानम् केन लिखितम् ?
   (ग) किम् अस्माकम् राष्ट्रियम् पुष्पम् ?
   (घ) कः अस्माकम् राष्ट्रियः खगः ?
   (ङ) कः अस्माकम् राष्ट्रियः पशुः ?

२. रिक्त स्थान की पूर्ति कीजिए —
   (क) ध्वजे ········ विराजन्ते।
   (ख) ········ अस्माकम् राष्ट्रियः खगः।
   (ग) कमलम् अस्माकम् राष्ट्रियम् ········।

३. पर्याय लिखिए—
   कमलम्, खगः।

४. संस्कृत में अनुवाद कीजिए—
   (क) सिंह जंगल का राजा है।
   (ख) झण्डा तिरङ्गा है।
   (ग) मयूर नाचता है।
   (घ) कमल सुन्दर पुष्प है।
   (ङ) वह घर जाता है।

**शब्दार्थाः**

**त्रि** (तीन) + **वर्णकः** (रंग वाला) = तिरङ्गा, **काषायवर्णं** = केसरिया रंग, **खगः** = पक्षी, **प्रतीक** = चिह्न, **विष** (जहर) + **कारकः** (करने वाले) = जहर फैलाने वाले, बुराई फैलाने वाले, **व्याघ्रः** = बाघ, **साम्प्रतम्** = अब।

पाठ–२६

# जनसङ्ख्या-शिक्षा

जनसङ्ख्या-शिक्षा एकः नवीनः विषयः अस्ति । अधुना सर्वे अपि विकासशीलाः देशाः जनसङ्ख्यायाः वृद्धेः कारणात् बहुचिन्तिताः सन्ति । अस्माकम् देशे अपि जनसङ्ख्यावृद्धिः एका विकटा कठिना च समस्या विद्यते ।

पुरा भारते मानवानाम् जीवनम् बहुसरलम्, संयममयम्, ब्रह्मचर्ययुतम् अध्यात्मचिन्तनपरम् च आसीत् । अतः तदा जनसङ्ख्यावृद्धिः समस्या न आसीत् । अतः एव तदानीम् अस्य विषयस्य अध्ययनस्य अध्यापनस्य च पाठ्यक्रमे सन्निवेशः न अभवत् । अधुना जनसङ्ख्यावृद्धिः एका भयावहा समस्या वर्तते । इमाम् समस्याम् समाधातुम् उत्तर प्रदेशे १६८१ ईसवीये वर्षे जनसङ्ख्या शिक्षा सञ्चालिता अभवत् ।

अस्माकम् देशे जनसङ्ख्यावृद्धेः कारणात् अनेकाः समस्याः दृश्यन्ते । विशालः परिवारः अशिक्षाम्, बुभुक्षाम्, अवनतिम्, कलहम् दैन्यम् च जनयति । अनेन विकासकार्यम्, उत्तमस्वास्थ्यम् सुखसमृद्धयः च दुष्प्रभाविताः भवन्ति । परिवारस्य एकता विखण्डिता भवति। किम्बहुना महति परिवारे बालकानाम् कन्यकानाम् च शिक्षायाः प्रगतेः कार्ये महान् अवरोधः जायते, येन सुखमयस्य शान्तिमयस्य च जीवनस्य कल्पना अपि कर्तुम् न शक्यते ।

देशस्य विकासाय जनसङ्ख्या शिक्षा बहून् नियमान् निर्दिशति । अनेन खलु शैशवात् एव छात्रेषु छात्रासु च आत्मनियमनम्, ब्रह्मचर्यम्, लघुपरिवारे दृढा आस्था, दृढः निश्चयः इत्यादयः अपेक्षिताः भवन्ति । तत्र पुत्रेषु कन्यकासु च समताबुद्धिः जनसङ्ख्याशिक्षायाः एकम् महत्त्वपूर्णम् रहस्यम् विद्यते । अनया शिक्षया विवाहिते सति आत्मसंयमनेन एका द्वे वा सन्ततिः स्यात्, न ततः अधिका इति दृढा भावना छात्रेषु जायते । अथ च तेषु उत्तरदायित्वस्य भावना अपि बाल्यात् एव सम्वर्धते ।

इत्थम् जनसङ्ख्या शिक्षा बालकेषु बालिकासु च कर्त्तव्यस्य, दायित्वस्य, त्यागस्य, संयमनियमयोः च भावनाम् उत्पाद्य सुखमयस्य जीवनस्य पृष्ठभूमेः निर्माणम् कुरुते । अनेन छात्राः विशालपरिवारस्य दोषेण लघुपरिवारस्य महत्त्वेन च परिचिताः भवन्ति ।

---

## अभ्यासः

१. निम्नलिखित प्रश्नों का उत्तर संस्कृत में लिखिए:—
   (क) कः एकः नवीनः विषयः अस्ति ?
   (ख) अधुना जनसङ्ख्या वृद्धिः कीदृशी समस्या वर्तते ?
   (ग) परिवारस्य का विखण्डिता भवति ?
   (घ) जनसङ्ख्या शिक्षायाः किम् महत्त्वपूर्णम् रहस्यम् विद्यते ?
   (ङ) बाल्यात् एव का सम्वर्धते ?

२. रिक्त स्थानों की पूर्ति कीजिए—
   (क) अतः तदा ........ समस्या न आसीत् ।
   (ख) ........ एकता विखण्डिता भवति ।
   (ग) देशस्य विकासाय जनसङ्ख्या शिक्षा बहून् नियमान् ........ ।

३. निम्नलिखित वाक्यों का संस्कृत में अनुवाद कीजिए—
   (क) राजेश का परिवार बड़ा है ।
   (ख) छोटे परिवार में सुख होता है ।
   (ग) जनसङ्ख्या शिक्षा से बड़ा लाभ है ।
   (घ) इससे देश का विकास होगा ।
   (ङ) बड़ा परिवार कष्ट का कारण है ।

४. निम्नलिखित पदों में विभक्ति बताइए—
   भारते, विषयस्य, येन, बाल्यात्, भावनाम् ।

**शब्दार्थाः**

पुरा = प्राचीन, भयावहा = भयानक, बुभुक्षा = भूख, दैन्यम् = दीनता (गरीबी), आस्था = विश्वास, उत्तरदायित्वस्य = जिम्मेदारी की ।

पाठ-३०

# पर्यावरणम्

अस्माकम् संरक्षणाय सम्वर्धनाय च प्रकृतिः सदैव यत्नम् करोति। सागराः, पर्वताः, वनानि, नद्यः, सरांसि सर्वाणि जगतः सुखानि सम्वर्धयन्ति। प्रसन्नाः तरवः वायोः विकारान् स्वयम् पिबन्ति अस्मभ्यम् स्वास्थ्यप्रदम् वायुमण्डलम् च प्रयच्छन्ति। पत्राणि, पुष्पाणि, वनानि, फलानि प्रदाय इमे अस्मान् बहु उपकुर्वन्ति। वातावरणस्य वायोश्च परिशोधनम् कुर्वन्ति। वनानि एव वनप्राणिनः सागरजन्तवश्चापि पर्यावरणस्य सन्तुलनम् स्थापयन्ति।

सम्प्रति तैलचालितानि यानानि यन्त्राणि च स्वकीयैः धूमैः स्वस्थम् वायुमण्डलम् भृशम् प्रदूषयन्ति। वायुप्रदूषणम् प्रतिक्षणम् वर्धते। शिलाखण्डान् विदार्य वनानि च विच्छिद्य निर्मितेषु गिरिमार्गेषु यानानि धावन्ति। अस्त्राणाम् परीक्षणैः समुद्रस्य वातावरणम् प्रदूष्यते।

यथा यथा प्रवर्धते प्रस्तरसयाणाम् मार्गाणाम् संख्या तथा तथा वर्धन्ते प्रदूषणप्रस्तरकाणि यानानि यन्त्राणि च। एतद् विपरीतम् तथा न वर्धन्ते वायुमण्डलस्य परिशोधनसाधनानि। स्वल्पतराय लाभाय लोभात् अज्ञानात् वा जनाः स्वकीयम् बहुविनाशयन्ति। वनप्राणिनः मनोविनोदाय हिंसन्ति। कतिपयपणानाम् लोभेन वनानि छिन्दन्ति। प्रदूषितैः जलैः गङ्गा-कावेरी प्रभृति नदीनाम् नीराणि परिदूषयन्ति। समुद्रप्राणिनाम् हिंसनम् यत्नेन कुर्वन्ति। अनेन जले स्थले गगने च सर्वत्र प्रदूषणम् वर्धते। अतः वनानि यत्नतः रक्षणीयानि। ग्रामेषु नगरेषु स्थाने स्थाने उद्यानानि समारोपणीयानि। शाकवाटिकानाम् सम्वर्धनम् करणीयम्। वनप्राणिनाम् संरक्षणाय अरण्यानाम् सङ्ख्या वर्धनीया। वृक्षाणाम् उच्छेदः रोधनीयः, येन सागराः निर्बाधम् समुल्लसन्तु गगनमण्डलम् स्वच्छम् भवतु। पर्वतेषु ओषधयः नदीस्रोतांसि च सम्वर्धन्ताम्।

## अभ्यासः

१. निम्नलिखित प्रश्नों का संस्कृत में उत्तर दीजिए—

(क) प्रकृतिः किमर्थम् सदैव यत्नम् करोति ?

(ख) सम्प्रति कानि स्वकीयैः धनैः वायुमण्डलम् दूषयन्ति ?

(ग) केन समुद्रस्य वातावरणम् प्रदूष्यते ?

(घ) कस्य संरक्षणाय अरण्यानाम् सङ्ख्या वर्धनीया ?

२. रिक्त स्थानों की पूर्ति कीजिए—

(क) ......पर्यावरणस्य सन्तुलनम् स्थापयन्ति ।

(ख) वायुप्रदूषणम् ..............वर्धते ।

(ग) वनानि यत्नतः ............... ।

३. निम्नलिखित वाक्यों का अनुवाद संस्कृत में कीजिए—

(क) सागर हिलोरें लेते हैं ।

(ख) वन शोभित होते हैं ।

(ग) धुआँ वायुमण्डल को प्रदूषित करता है ।

(घ) अस्त्रों के परीक्षणों से समुद्र का जल प्रदूषित होता है ।

(ङ) जल, थल एवं अन्तरिक्ष में प्रदूषण बढ़ रहा है ।

४. ओषधि शब्द के प्रथमा विभक्ति में रूप लिखिए ।

५. गगन शब्द के पर्याय लिखिए ।

**शब्दार्थाः**

**सरांसि**=तालाब, **जन्तवः**=जीव, प्राणी, **तैलचालितानि**=तेल से चलने वाले, **यानानि**=यान, **विच्छिद्य**=काटकर, **प्रदूष्यते**=प्रदूषित किया जा रहा है, **नीराणि**=जल, **उच्छेद**=कटाई । **रोधनीयः**=रोका जाना चाहिए । **समारोपणीयानि**=लगाये जाने चाहिए ।

पाठ–३१

# बालगीतम्

कुसुमानां कलिकाः मा त्रोटय ।
पुस्तकस्य पत्रं मा मोटय ॥
वातायनशीशं मा स्फोटय ।
दुष्टैः सम्बन्धं मा योजय ॥ १ ॥
गच्छति शकटे मा आरोहेः ।
चलतः शकटात् मा अवरोहेः ॥
दुष्टैः पुरुषैः सह मा गच्छेः ।
कृत्वा कर्म झटिति आगच्छेः ॥ २ ॥
ऊषरभुवि शस्यम् उत्पादय ।
गिरिशिखरे कुसुमानि विकासय ॥
पाषाणे कोमलताम् आनय ।
आपत्तौ आनन्दम् आनय ॥ ३ ॥
बिना घनं पानीयं वर्षय ।
शत्रुं मित्रं सर्वं हर्षय ॥
कामक्रोधवह्निं निर्वापय ।
भूमितलं स्वर्गं सम्पादय ॥ ४ ॥

### अभ्यासः

१. उपर्युक्त श्लोकों को याद कीजिए ।
२. अन्तिम श्लोक का अर्थ लिखिए ।

**शब्दार्थाः**

**त्रोटय** = तोड़ो, **मोटय** = मोड़ो, **वातायनशीशम्** = खिड़की का शीशा, **स्फोटय** = तोड़िए, **शकटे** = गाड़ी पर, **आरोहेः** = चढ़ो, **अवरोहेः** = उतरो, **झटिति** = तुरन्त, **ऊषर** = ऊसर, **शस्यम्** = फसल, **वह्नि** = अग्नि, **निर्वापय** = बुझाओ ।

# व्याकरणम्

भाषा के सम्यक् ज्ञान के लिए व्याकरण की आवश्यकता होती है। व्याकरण द्वारा पद-रचना, वाक्य-रचना तथा पदों एवं विराम चिह्नों आदि के समुचित प्रयोग का ज्ञान होता है।

पदों की रचना के लिए वर्ण का ज्ञान अनिवार्य होता है। वर्ण दो प्रकार के होते हैं—

१. स्वर (अ, आ, इ, ई, उ, ऊ, ऋ, ॠ, लृ, ए, ऐ ओ, औ)
२. व्यञ्जन (क से म तक सभी वर्ग, य, र, ल, व, श, ष, स, ह) इन वर्णों का उच्चारण मुख के पृथक-पृथक भागों के सहयोग से होता है :—



## पद (शब्द)

वाक्य की रचना पदों के सहयोग से होती है। पद दो प्रकार के होते हैं—तिङन्त एवं सुबन्त।

१. **तिङन्त**—जिन क्रियावाची शब्दों का धातु रूप चलता है, वे तिङन्त पद कहे जाते हैं। जैसे गच्छति, पठति, लिखति आदि।

२. **सुबन्त**—जिन पदों का शब्दरूप चलता है, उन्हें सुबन्त पद कहते हैं। जैसे—रामः, मुनिः, भानुः, नदी आदि। सुबन्तों के संज्ञा, सर्वनाम, विशेषण आदि भेद होते हैं।

## लिङ्ग

सुवन्त पदों के तीन लिङ्ग कहे गये हैं—

१. **स्त्रीलिङ्ग**—स्त्रीवाची शब्द, जैसे—रमा, लता, नदी आदि।

२. **पुंल्लिङ्ग**—पुरुषवाची शब्द, जैसे रामः, अश्वः, बालकः आदि।

३. **नपुंसकलिङ्ग**—जो शब्द दोनों उपर्युक्त भेदों में न आते हों, जैसे—पुस्तकम्, फलम्, नेत्रम् आदि।

सर्वनाम पदों का रूप तीनों लिङ्गों में चलता है। जैसे सः, सा, तद्। विशेषण पदों का लिङ्ग उनके विशेष्य के अनुसार होता है, जैसे सुन्दरी बालिका, सुन्दरः अश्वः, सुन्दरम् पुष्पम् आदि।

## वचन

संस्कृत में पदों के तीन वचन होते हैं—

**एकवचन**—जब शब्द से एक वस्तु का ज्ञान हो, जैसे—बालकः (एक बालक)।

**द्विवचन**—जब शब्द से दो वस्तुओं का ज्ञान हो, जैसे—बालकौ (दो बालक)

**बहुवचन**—जब शब्द से किसी वस्तु के दो से अधिक होने का ज्ञान हो, जैसे बालकाः (बहुवचन) बहुत से बालक।

## लकार

क्रिया पदों की दशा बताने के लिए लकारों का प्रयोग किया जाता है। यहाँ चार लकारों की चर्चा की गयी है---

१. लट् लकार (वर्तमान काल) गच्छति, गच्छतः, गच्छन्ति ।

२. लङ् लकार (भूतकाल) अगच्छत्, अगच्छताम्, अगच्छन् ।

३. लृट् लकार (भविष्यकाल) गमिष्यति, गमिष्यतः, गमिष्यन्ति ।

४. लोट् लकार (जब क्रियापद से चाहिए, ऐसा हो, आदेश आदि का भाव प्रकट हो।) गच्छतु, गच्छताम्, गच्छन्तु ।

## पुरुष और वचन

**पुरुष**

प्रत्येक लकार में तीन पुरुष और तीन वचन होते हैं।

(१) **प्रथम पुरुष**---इसके रूपों का प्रयोग अन्य पुरुष सः--वह, तौ--वे दोनों, ते--वे लोग, तथा संज्ञा एवं सर्वनाम पदों के साथ होता है।

(२) **मध्यम पुरुष**--इसके रूपों का प्रयोग त्वम्--तुम, युवाम्--तुम दोनों, तथा यूयम्--तुम लोग (युष्मद्) के साथ होता है।

(३) **उत्तम पुरुष**---इसके रूपों का प्रयोग--मैं, हम दोनों, हम लोग (अस्मद्) के साथ होता है।

**वचन**

पुरुष की तरह वचन भी तीन होते हैं---

**एकवचन**---प्रथम, मध्यम तथा उत्तम पुरुष के एकवचन का प्रयोग एकवचन के कर्ता के साथ होता है।

**द्विवचन**--- प्रथम, मध्यम तथा उत्तम पुरुष के द्विवचन का प्रयोग द्विवचन के के कर्ता के साथ होता है।

**बहुवचन**---प्रथम, मध्यम तथा उत्तम पुरुष के बहुवचन का प्रयोग बहुवचन के कर्ता के साथ होता है।

इस प्रकार पुरुष और वचन की दृष्टि से लकार के ९ भेद हैं। जैसे—

## लट् लकार (गम् धातु)

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्रथम पु० | गच्छति | गच्छतः | गच्छन्ति |
| मध्यम पु० | गच्छसि | गच्छथः | गच्छथ |
| उत्तम पु० | गच्छामि | गच्छावः | गच्छामः |

इनका प्रयोग इस प्रकार होता है।

१. रामः गच्छति=राम जाता है (प्रथम पुरुष, एक वचन)
२. युवाम् गच्छथः=तुम दोनों जाते हो (मध्यम पुरुष द्विवचन)
३. वयम् गच्छामः=हम सब जाते हैं (उत्तम पुरुष, बहुवचन)

संस्कृत में लिङ्ग के भेद से क्रिया के रूप में अन्तर नहीं पड़ता है, जैसे—

रामः गच्छति=राम जाता है।
रमा गच्छति=रमा जाती है।

## कारक एवं विभक्ति

वाक्य में जिन शब्दों का सम्बन्ध क्रिया से होता है, उन्हें कारक कहते हैं। ये कारक ६ कहे गये हैं—कर्ता, कर्म, करण, सम्प्रदान, अपादान और अधिकरण। संस्कृत में सम्बन्ध को कारक नहीं माना जाता है, क्योंकि इसका सम्बन्ध क्रिया से न होकर अन्य पदों से होता है। संस्कृत में ये कारक विभक्ति द्वारा कहे जाते हैं—

### १. प्रथमा विभक्ति (कर्ता कारक)

वाक्य में जिस शब्द का क्रिया से सम्बन्ध कर्ता के रूप में होता है, उसमें प्रथमा विभक्ति होती है। जैसे रामः पठति। इस वाक्य में "पठति" का कर्ता राम है, अतः राम में प्रथमा विभक्ति हुई।

### २. द्वितीया विभक्ति (कर्म कारक)

सकर्मक धातुओं वाले वाक्य में क्रिया द्वारा कर्ता जिस कार्य को करना चाहता है, उसमें द्वितीया विभक्ति होती है। जैसे—रामः पुस्तकम् पठति।

इस वाक्य में कर्ता रामः, पठति इस क्रिया के द्वारा पुस्तक को पढ़ना चाहता है, पढ़ने का कर्म पुस्तक है, अतः पुस्तक में द्वितीया विभक्ति होती है।

**३. तृतीया विभक्ति (करण कारक)**

क्रिया को पूरा करने के लिए कर्ता जिस साधन का प्रयोग करता है, उसमें तृतीया विभक्ति लगती है। जैसे "सः नेत्राभ्याम् पश्यति।" इस वाक्य में कर्ता 'सः' देखने के लिए नेत्रों का प्रयोग करता है, अतः नेत्र में तृतीया विभक्ति होती है।

**४. चतुर्थी विभक्ति (सम्प्रदान कारक)**

कर्ता, क्रिया के द्वारा जिसके लिए कार्य करता है, उस शब्द से चतुर्थी विभक्ति होती है। जैसे—'विद्या मोक्षाय भवति।' इसमें विद्या का होना मोक्ष के लिए है, अतः मोक्ष में चतुर्थी विभक्ति हुई।

**५. पञ्चमी विभक्ति (अपादान कारक)**

क्रिया से सम्बद्ध कर्ता जब किसी से अलग होता है, तो जिससे अलग हो, उसमें पञ्चमी विभक्ति होती है। जैसे—

"पत्राणि वृक्षात् पतन्ति "यहाँ" 'पत्राणि' कर्ता 'पतन्ति' क्रिया के कारण वृक्ष से अलग होता है, अतः वृक्ष में पञ्चमी विभक्ति की गयी।

**६. षष्ठी विभक्ति (सम्बन्ध कारक)**

यह विभक्ति कोई कारक नहीं है, क्योंकि क्रिया से इसका सम्बन्ध नहीं होता। इसका अन्य पदों से सम्बन्ध होता है। जैसे—सूर्यस्य प्रकाशः अस्ति। यहाँ सूर्य का प्रकाश से सम्बन्ध है, अतः सूर्य में षष्ठी विभक्ति हुई।

**७. सप्तमी विभक्ति (अधिकरण कारक)**

क्रिया के आश्रय में सप्तमी विभक्ति होती है। जैसे—'बालकः आसने तिष्ठति' इस वाक्य में तिष्ठति पद का आश्रय आसन है, अतः आसन शब्द में सप्तमी विभक्ति हुई है।

८. सम्बोधन

यह कारक नहीं है, बल्कि प्रथमा विभक्ति का ही रूप है। इसका क्रिया से कोई सम्बन्ध नहीं होता। जैसे राम! विद्यालयम् गच्छ। यहाँ राम सम्बोधन पद है तथा "गच्छ" इस क्रिया पद से "त्वम् गच्छ" (तुम जाओ) यह भाव प्रकट होता है।

## सन्धि

किन्हीं दो वर्णों के अति समीप आने से सन्धि हो जाती है। यह तीन प्रकार की होती है—

१. स्वर सन्धि

दो स्वरों के मिलने पर स्वर सन्धि होती है। जैसे अ+अ=आ, अ+इ =ए आदि। जैसे—हिम+आलयः=हिमालयः।

२. व्यञ्जन सन्धि

व्यञ्जन के साथ व्यञ्जन या स्वर मिलने पर व्यञ्जन सन्धि होती है। जैसे—जगत्+ईशः=जगदीशः।

३. विसर्ग सन्धि

विसर्ग के साथ स्वर या व्यञ्जन के मिलने पर विसर्ग सन्धि होती है। जैसे—ततः+च=ततश्च।

## स्वर सन्धि

### दीर्घ सन्धि

अ, आ, इ, ई, उ, ऊ, ऋ, ॠ, लृ के बाद यदि यही स्वर आयें, तो दीर्घ सन्धि होती है।

| | | | | |
|---|---|---|---|---|
| अ, आ | + | अ, आ | = | आ |
| इ, ई | + | इ, ई | = | ई |
| उ, ऊ | + | उ, ऊ | = | ऊ |
| ऋ, ॠ | + | ऋ, ॠ | = | ॠ |
| लृ | + | लृ | = | लृ |

जैसे—पुस्तक + आलयः = पुस्तकालयः
नदी + ईशः = नदीशः
विधु + उदयः = विधूदयः
पितृ + ऋणम् = पितॄणम्

गुण सन्धि

अ या आ के बाद इ, ई आये तो "ए", उ, ऊ आये तो "ओ" तथा ऋ, ॠ आवे तो "अर्" हो जाता है—

अ, आ + इ, ई = ए
अ, आ + उ, ऊ = ओ
अ, आ + ऋ, ॠ = अर्

यथा—सुर + ईशः = सुरेशः, गङ्गा + उदकम् = गङ्गोदकम्, ग्रीष्म + ऋतु = ग्रीष्मर्तुः ।

## अभ्यासः

१. इनका उच्चारण स्थान बताइए—
अ, इ, उ, ऋ, लृ, ए, ऐ ,
२. इनका लिङ्ग बताइए—
पुत्र, सिंह, साधु, बालिका, पुस्तक, नदी, नारी, फल ।
३. संधि कीजिए—
नदी + ईशः, देव + आलयः, उप + इन्द्रः ।
४. सन्धि विच्छेद कीजिए —
सूर्योदयः, विद्यार्थी, विद्यालयः ।
५. इन वाक्यों में रेखांकित पदों की विभक्ति बताइए —
(क) रामः गच्छति ।
(ख) सः गृहम् गच्छति ।
(ग) विद्या ज्ञानाय भवति ।
(घ) रमा कन्दुकेन क्रीडति ।
(ङ) लता गृहात् गच्छति ।
(च) उषा प्रयागे वसति ।

## अव्यय

अव्यय पदों का संस्कृत में महत्त्वपूर्ण स्थान है। सभी लिङ्गों, सभी विभक्तियों तथा सभी कालों में इनका रूप यथावत् रहता है---

"सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु। वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्।" कुछ अव्यय पद इस प्रकार हैं :---

शनैः (धीरे), प्रातः (सुबह), सायम् (संध्या), अत्र (यहाँ), तत्र (वहाँ), कुत्र (कहाँ)।

## वाक्य प्रयोग

रमा शनैः लिखति।
रामः प्रातः विद्यालयम् गच्छति।
माता सायम् भोजनम् पचति।
मोहन! अत्र आगच्छ।
फलानि तत्र सन्ति।
बालक ! कुत्र गच्छसि ?

## अभ्यासः

१. वाक्य बनाइए---अत्र, तत्र, कुत्र।

२. निम्नलिखित वाक्यों में से अव्यय पद छाँटिए---
(क) लता प्रातः उत्तिष्ठति।
(ख) उमा सायम् पठति।
(ग) शिशुः शनैः चलति।

## शब्द रूप

### राम (अकारान्त पुंल्लिङ्ग)

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्रथमा | रामः | रामौ | रामाः |
| द्वितीया | रामम् | रामौ | रामान् |
| तृतीया | रामेण | रामाभ्याम् | रामैः |
| चतुर्थी | रामाय | रामाभ्याम् | रामेभ्यः |
| पञ्चमी | रामात् | रामाभ्याम् | रामेभ्यः |
| षष्ठी | रामस्य | रामयोः | रामाणाम् |
| सप्तमी | रामे | रामयोः | रामेषु |
| सम्बोधन | हे राम ! | हे रामौ ! | हे रामाः ! |

इसी प्रकार बालक, सूर्य, सिंह, गज, अश्व, नर आदि शब्दों के रूप चलेंगे।

### हरि (इकारान्त पुंल्लिङ्ग)

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्रथमा | हरिः | हरी | हरयः |
| द्वितीया | हरिम् | हरी | हरीन् |
| तृतीया | हरिणा | हरिभ्याम् | हरिभिः |
| चतुर्थी | हरये | हरिभ्याम् | हरिभ्यः |
| पञ्चमी | हरेः | हरिभ्याम् | हरिभ्यः |
| षष्ठी | हरेः | हर्योः | हरीणाम् |
| सप्तमी | हरौ | हर्योः | हरिषु |
| सम्बोधन | हे हरे ! | हे हरी ! | हे हरयः ! |

इसी प्रकार मुनि, कवि, अग्नि आदि शब्दों के रूप चलेंगे।

## साधु (उकारान्त पुल्लिङ्ग)

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्रथमा | साधुः | साधू | साधवः |
| द्वितीया | साधुम् | साधू | साधून् |
| तृतीया | साधुना | साधुभ्याम् | साधुभिः |
| चतुर्थी | साधवे | साधुभ्याम् | साधुभ्यः |
| पञ्चमी | साधोः | साधुभ्याम् | साधुभ्यः |
| षष्ठी | साधोः | साध्वोः | साधूनाम् |
| सप्तमी | साधौ | साध्वोः | साधुषु |
| सम्बोधन | हे साधो ! | हे साधू | हे साधवः ! |

इसी प्रकार शिशु, भानु, गुरु आदि शब्दों के रूप चलेंगे।

## रमा (आकारान्त स्त्रीलिङ्ग)

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्रथमा | रमा | रमे | रमाः |
| द्वितीया | रमाम् | रमे | रमाः |
| तृतीया | रमया | रमाभ्याम् | रमाभिः |
| चतुर्थी | रमायै | रमाभ्याम् | रमाभ्यः |
| पञ्चमी | रमायाः | रमाभ्याम् | रमाभ्यः |
| षष्ठी | रमायाः | रमयोः | रमाणाम् |
| सप्तमी | रमायाम् | रमयोः | रमासु |
| सम्बोधन | हे रमे ! | हे रमे ! | हे रमाः ! |

इसी प्रकार बालिका, उमा, सुता, लता आदि शब्दों के रूप चलेंगे।

## नदी (ईकारान्त स्त्रीलिङ्ग)

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्रथमा | नदी | नद्यौ | नद्यः |
| द्वितीया | नदीम् | नद्यौ | नदीः |
| तृतीया | नद्या | नदीभ्याम् | नदीभिः |
| चतुर्थी | नद्यै | नदीभ्याम् | नदीभ्यः |
| पञ्चमी | नद्याः | नदीभ्याम् | नदीभ्यः |
| षष्ठी | नद्याः | नद्योः | नदीनाम् |
| सप्तमी | नद्याम् | नद्योः | नदीषु |
| सम्बोधन | हे नदि ! | हे नद्यौ ! | हे नद्यः ! |

इसी प्रकार देवी, दासी, जननी, रजनी, कुटी, कुमारी, भगिनी, नारी, दीपावली आदि शब्दों के रूप होते हैं ।

## जल (अकारान्त नपुंसकलिङ्ग)

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्रथमा | जलम् | जले | जलानि |
| द्वितीया | जलम् | जले | जलानि |
| तृतीया | जलेन | जलाभ्याम् | जलैः |
| चतुर्थी | जलाय | जलाभ्याम् | जलेभ्यः |
| पञ्चमी | जलात् | जलाभ्याम् | जलेभ्यः |
| षष्ठी | जलस्य | जलयोः | जलानाम् |
| सप्तमी | जले | जलयोः | जलेषु |
| सम्बोधन | हे जल ! | हे जले ! | हे जलानि ! |

इसी प्रकार शरीर, फल, पुस्तक, नगर, धन, नेत्र, पुष्प आदि शब्दों के रूप चलेंगे ।

## मधु (नपुंसकलिङ्ग)

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्रथमा | मधु | मधुनी | मधूनि |
| द्वितीया | मधु | मधुनी | मधूनि |
| तृतीया | मधुना | मधुभ्याम् | मधुभिः |
| चतुर्थी | मधुने | मधुभ्याम् | मधुभ्यः |
| पञ्चमी | मधुनः | मधुभ्याम् | मधुभ्यः |
| षष्ठी | मधुनः | मधुनोः | मधूनाम् |
| सप्तमी | मधुनि | मधुनोः | मधुषु |
| सम्बोधन | हे मधु ! | हे मधुनी ! | हे मधूनि |

इसी प्रकार वस्तु, अश्रु आदि के रूप चलेंगे।

## इदम्—यह (पुंल्लिङ्ग)

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्रथमा | अयम् | इमौ | इमे |
| द्वितीया | इमम् | इमौ | इमान् |
| तृतीया | अनेन | आभ्याम् | एभिः |
| चतुर्थी | अस्मै | आभ्याम् | एभ्यः |
| पञ्चमी | अस्मात् | आभ्याम् | एभ्यः |
| षष्ठी | अस्य | अनयोः | एषाम् |
| सप्तमी | अस्मिन् | अनयोः | एषु |

## (स्त्रीलिङ्ग)

| | | | |
|---|---|---|---|
| प्रथमा | इयम् | इमे | इमाः |
| द्वितीया | इमाम् | इमे | इमाः |
| तृतीया | अनया | आभ्याम् | आभिः |
| चतुर्थी | अस्यै | आभ्याम् | आभ्यः |

| | | | |
|---|---|---|---|
| पञ्चमी | अस्याः | आभ्याम् | आभ्यः |
| षष्ठी | अस्याः | अनयोः | आसाम् |
| सप्तमी | अस्याम् | अनयोः | आसु |

(नपुंसकलिङ्ग)

| | | | |
|---|---|---|---|
| प्रथमा | इदम् | इमे | इमानि |
| द्वितीया | इदम् | इमे | इमानि |

(शेष रूप पुंल्लिङ्ग के समान होते हैं।)

अस्मद्–मैं (पुंल्लिङ्ग तथा स्त्रीलिङ्ग)

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्रथमा | अहम् | आवाम् | वयम् |
| द्वितीया | माम्, मा | आवाम्, नौ | अस्मान्, नः |
| तृतीया | मया | आवाभ्याम् | अस्माभिः |
| चतुर्थी | मह्यम्, मे | आवाभ्याम्, नौ | अस्मभ्यम्, नः |
| पञ्चमी | मत् | आवाभ्याम् | अस्मत् |
| षष्ठी | मम, मे | आवयोः, नौ | अस्माकम्, नः |
| सप्तमी | मयि | आवयोः | अस्मासु |

युष्मद् (पुंल्लिङ्ग तथा स्त्रीलिङ्ग)

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्रथमा | त्वम् | युवाम् | यूयम् |
| द्वितीया | त्वाम्, त्वा | युवाम्, वाम् | युष्मान्, वः |
| तृतीया | त्वया | युवाभ्याम् | युष्माभिः |
| चतुर्थी | तुभ्यम्, ते | युवाभ्याम्, वाम् | युष्मभ्यम्, वः |
| पञ्चमी | त्वत् | युवाभ्याम् | युष्मत् |
| षष्ठी | तव, ते | युवयोः, वाम् | युष्माकम्, वः |
| सप्तमी | त्वयि | युवयोः, | युष्मासु |

## किम्—कौन (पुंल्लिङ्ग)

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्रथमा | कः | कौ | के |
| द्वितीया | कम् | कौ | कान् |
| तृतीया | केन | काभ्याम् | कैः |
| चतुर्थी | कस्मै | काभ्याम् | केभ्यः |
| पञ्चमी | कस्मात् | काभ्याम् | केभ्यः |
| षष्ठी | कस्य | कयोः | केषाम् |
| सप्तमी | कस्मिन् | कयोः | केषु |

## (स्त्रीलिङ्ग)

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्रथमा | का | के | काः |
| द्वितीया | काम् | के | काः |
| तृतीया | कया | काभ्याम् | काभिः |
| चतुर्थी | कस्यै | काभ्याम् | काभ्यः |
| पञ्चमी | कस्याः | काभ्याम् | काभ्यः |
| षष्ठी | कस्याः | कयोः | कासाम् |
| सप्तमी | कस्याम् | कयोः | कासु |

## (नपुंसकलिङ्ग)

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्रथमा | किम् | के | कानि |
| द्वितीया | किम् | के | कानि |

(शेष रूप पुंलिङ्ग के समान होते हैं)

## यद् (पुंल्लिङ्ग)

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्रथमा | यः | यौ | ये |
| द्वितीया | यम् | यौ | यान् |
| तृतीया | येन | याभ्याम् | यैः |
| चतुर्थी | यस्मै | याभ्याम् | येभ्यः |
| पञ्चमी | यस्मात्, द् | याभ्याम् | येभ्यः |
| षष्ठी | यस्य | ययोः | येषाम् |
| सप्तमी | यस्मिन् | ययोः | येषु |

## यद् (स्त्रीलिङ्ग)

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्रथमा | या | ये | याः |
| द्वितीया | याम् | ये | याः |
| तृतीया | यया | याभ्याम् | याभिः |
| चतुर्थी | यस्यै | याभ्याम् | याभ्यः |
| पञ्चमी | यस्याः | याभ्याम् | याभ्यः |
| षष्ठी | यस्याः | ययोः | यासाम् |
| सप्तमी | यस्याम् | ययोः | यासु |

## (नपुंसकलिङ्ग)

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्रथमा | यत्, द् | ये | यानि |
| द्वितीया | यत्, द् | ये | यानि |

(शेष पुंल्लिङ्ग की तरह रूप चलेंगे)

## तद् (पुंल्लिङ्ग)

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्रथमा | सः | तौ | ते |
| द्वितीया | तम् | तौ | तान् |
| तृतीया | तेन | ताभ्याम् | तैः |
| चतुर्थी | तस्मै | ताभ्याम् | तेभ्यः |
| पञ्चमी | तस्मात् | ताभ्याम् | तेभ्यः |
| षष्ठी | तस्य | तयोः | तेषाम् |
| सप्तमी | तस्मिन् | तयोः | तेषु |

## तद् (स्त्रीलिङ्ग)

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्रथमा | सा | ते | ताः |
| द्वितीया | ताम् | ते | ताः |
| तृतीया | तया | ताभ्याम् | ताभिः |
| चतुर्थी | तस्यै | ताभ्याम् | ताभ्यः |
| पञ्चमी | तस्याः | ताभ्याम् | ताभ्यः |
| षष्ठी | तस्याः | तयोः | तासाम् |
| सप्तमी | तस्याम् | तयोः | तासु |

## तद् (नपुंसकलिङ्ग)

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्रथमा | तत्, द् | ते | तानि |
| द्वितीया | तत्, द् | ते | तानि |

(शेष रूप पुंल्लिङ्ग के समान चलेंगे।)

# धातु रूप

## भू (होना) लट् लकार (वर्तमानकाल)

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्रथम पुरुष | भवति | भवतः | भवन्ति |
| मध्यम पुरुष | भवसि | भवथः | भवथ |
| उत्तम पुरुष | भवामि | भवावः | भवामः |

## लोट् लकार (आज्ञार्थक)

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्रथम पुरुष | भवतु | भवताम् | भवन्तु |
| मध्यम पुरुष | भव | भवतम् | भवत |
| उत्तम पुरुष | भवानि | भवाव | भवाम |

## लङ् लकार (भूतकाल)

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्रथम पुरुष | अभवत् | अभवताम् | अभवन् |
| मध्यम पुरुष | अभवः | अभवतम् | अभवत |
| उत्तम पुरुष | अभवम् | अभवाव | अभवाम |

## लृट् लकार (भविष्यकाल)

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्रथम पुरुष | भविष्यति | भविष्यतः | भविष्यन्ति |
| मध्यम पुरुष | भविष्यसि | भविष्यथः | भविष्यथ |
| उत्तम पुरुष | भविष्यामि | भविष्यावः | भविष्यामः |

गम् (जाना)

## लट् लकार (वर्तमानकाल)

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्रथम पुरुष | गच्छति | गच्छत: | गच्छन्ति |
| मध्यम पुरुष | गच्छसि | गच्छथ: | गच्छथ |
| उत्तम पुरुष | गच्छामि | गच्छाव: | गच्छाम: |

## लोट् लकार (आज्ञार्थक)

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्रथम पुरुष | गच्छतु | गच्छताम् | गच्छन्तु |
| मध्यम पुरुष | गच्छ | गच्छतम् | गच्छत |
| उत्तम पुरुष | गच्छानि | गच्छाव | गच्छाम |

## लङ् लकार (भूतकाल)

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्रथम पुरुष | अगच्छत् | अगच्छताम् | अगच्छन् |
| मध्यम पुरुष | अगच्छ: | अगच्छतम् | अगच्छत |
| उत्तम पुरुष | अगच्छम् | अगच्छाव | अगच्छाम |

## लृट् लकार (भविष्यकाल)

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्रथम पुरुष | गमिष्यति | गमिष्यत: | गमिष्यन्ति |
| मध्यम पुरुष | गमिष्यसि | गमिष्यथ: | गमिष्यथ |
| उत्तम पुरुष | गमिष्यामि | गमिष्याव: | गमिष्याम: |

पठ्-पढ़ना

लट् लकार (वर्तमान काल)

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्रथम पुरुष | पठति | पठतः | पठन्ति |
| मध्यम पुरुष | पठसि | पठथः | पठथ |
| उत्तम पुरुष | पठामि | पठावः | पठामः |

लोट् लकार (आज्ञार्थक)

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्रथम पुरुष | पठतु | पठताम् | पठन्तु |
| मध्यम पुरुष | पठ | पठतम् | पठत |
| उत्तम पुरुष | पठानि | पठाव | पठाम |

लङ् लकार (भूतकाल)

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्रथम पुरुष | अपठत् | अपठताम् | अपठन् |
| मध्यम पुरुष | अपठः | अपठतम् | अपठत |
| उत्तम पुरुष | अपठम् | अपठाव | अपठाम |

लृट् लकार (भविष्यकाल)

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्रथम पुरुष | पठिष्यति | पठिष्यतः | पठिष्यन्ति |
| मध्यम पुरुष | पठिष्यसि | पठिष्यथः | पठिष्यथ |
| उत्तम पुरुष | पठिष्यामि | पठिष्यावः | पठिष्यामः |

पत् (गिरना)

लट् लकार (वर्तमान काल)

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्रथम पुरुष | पतति | पततः | पतन्ति |

| | | | |
|---|---|---|---|
| मध्यम पुरुष | पतसि | पतथः | पतथ |
| उत्तम पुरुष | पतामि | पतावः | पतामः |

लोट् लकार (आज्ञार्थक)

| | | | |
|---|---|---|---|
| प्रथम पुरुष | पततु | पतताम् | पतन्तु |
| मध्यम पुरुष | पत | पततम् | पतत |
| उत्तम पुरुष | पतानि | पताव | पताम |

लङ लकार (भूतकाल)

| | | | |
|---|---|---|---|
| प्रथम पुरुष | अपतत् | अपतताम् | अपतन् |
| मध्यम पुरुष | अपतः | अपततम् | अपतत |
| उत्तम पुरुष | अपतम् | अपताव | अपताम |

लृट् लकार (भविष्यकाल)

| | | | |
|---|---|---|---|
| प्रथम पुरुष | पतिष्यति | पतिष्यतः | पतिष्यन्ति |
| मध्यम पुरुष | पतिष्यसि | पतिष्यथः | पतिष्यथ |
| उत्तम पुरुष | पतिष्यामि | पतिष्यावः | पतिष्यामः |

खेल् (खेलना)

लट् लकार (वर्तमानकाल)

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्रथम पुरुष | खेलति | खेलतः | खेलन्ति |
| मध्यम पुरुष | खेलसि | खेलथः | खेलथ |
| उत्तम पुरुष | खेलामि | खेलावः | खेलामः |

लोट् लकार (आज्ञार्थक)

| | | | |
|---|---|---|---|
| प्रथम पुरुष | खेलतु | खेलताम् | खेलन्तु |
| मध्यम पुरुष | खेल | खेलतम् | खेलत |
| उत्तम पुरुष | खेलानि | खेलाव | खेलाम |

### लङ् लकार (भूतकाल)

| | | | |
|---|---|---|---|
| प्रथम पुरुष | अखेलत् | अखेलताम् | अखेलन् |
| मध्यम पुरुष | अखेल: | अखेलतम् | अखेलत |
| उत्तम पुरुष | अखेलम् | अखेलाव | अखेलाम |

### लृट् लकार (भविष्यकाल)

| | | | |
|---|---|---|---|
| प्रथम पुरुष | खेलिष्यति | खेलिष्यत: | खेलिष्यन्ति |
| मध्यम पुरुष | खेलिष्यसि | खेलिष्यथ: | खेलिष्यथ |
| उत्तम पुरुष | खेलिष्यामि | खेलिष्याव: | खेलिष्याम: |

## अस् (होना)

### लट् लकार (वर्तमानकाल)

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्रथम पुरुष | अस्ति | स्त: | सन्ति |
| मध्यम पुरुष | असि | स्थ: | स्थ |
| उत्तम पुरुष | अस्मि | स्व: | स्म: |

### लोट् लकार (आज्ञार्थक)

| | | | |
|---|---|---|---|
| प्रथम पुरुष | अस्तु | स्ताम् | सन्तु |
| मध्यम पुरुष | एधि | स्तम् | स्त |
| उत्तम पुरुष | असानि | असाव | असाम |

### लङ् लकार (भूतकाल)

| | | | |
|---|---|---|---|
| प्रथम पुरुष | आसीत् | आस्ताम् | आसन् |
| मध्यम पुरुष | आसी: | आस्तम् | आस्त |
| उत्तम पुरुष | आसम् | आस्व | आस्म |

### लृट् लकार (भविष्य काल)

| | | | |
|---|---|---|---|
| प्रथम पुरुष | भविष्यति | भविष्यतिः | भविष्यन्ति |
| मध्यम पुरुष | भविष्यसि | भविष्यथ:: | भविष्यथ |
| उत्तम पुरुष | भविष्यामि | भविष्यावः | भविष्यामः |

## कृ (करना)

### लट् लकार (वर्तमान काल)

| | | | |
|---|---|---|---|
| प्रथम पुरुष | करोति | कुरुतः | कुर्वन्ति |
| मध्यम पुरुष | करोषि | कुरुथः | कुरुथ |
| उत्तम पुरुष | करोमि | कुर्वः | कुर्मः |

### लोट् लकार (आज्ञार्थक)

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्रथम पुरुष | करोतु | कुरुताम् | कुर्वन्तु |
| मध्यम पुरुष | कुरु | कुरुतम् | कुरुत |
| उत्तम पुरुष | करवाणि | करवाव | करवाम |

### लङ् लकार (भूतकाल)

| | | | |
|---|---|---|---|
| प्रथम पुरुष | अकरोत् | अकुरुताम् | अकुर्वन् |
| मध्यम पुरुष | अकरोः | अकुरुतम् | अकुरुत |
| उत्तम पुरुष | अकरवम् | अकुर्व | अकुर्म |

### लृट् लकार (भविष्यकाल)

| | | | |
|---|---|---|---|
| प्रथम पुरुष | करिष्यति | करिष्यतः | करिष्यन्ति |
| मध्यम पुरुष | करिष्यसि | करिष्यथः | करिष्यथ |
| उत्तम पुरुष | करिष्यामि | करिष्यावः | करिष्यामः |

# प्रार्थना

वह शक्ति हमें दो दयानिधे, कर्तव्य मार्ग पर डट जावें।
पर सेवा पर उपकार में हम, जग-जीवन सफल बना जावें।।१।।

हम दीन दुखी, निबलों विकलों के सेवक बन संताप हरें।
जो हैं अटके भूले भटके, उनको तारें खुद तर जावें।।२।।

छल द्वेष-द्वेष-पाखण्ड झूठ-अन्याय से निशि दिन दूर रहें।
जीवन हो शुद्ध सरल अपना, शुचि प्रेम सुधारस बरसावें।।३।।

निज आन-मान मर्यादा का, प्रभु ध्यान रहे अभिमान रहे।
जिस देश-जाति में जन्म लिया, बलिदान उसी पर हो जावें।।४।।




केवल मुख्यपृष्ठ राजकीय मुद्रणालय, वाराणसी में मुद्रित

पी० एस० यू० पी० (बा०)-7 शिक्षा-22-1-91-5,00000 (आफसेट)।